प्रवर्तमानस्स जडेषु कांचि
छभेत पीडां नहि चेतसि स्वे ॥ ६० ॥
स्पृशे स्स्पर्शेन्द्रियेणैव प्रारब्धं साम्यतो वहेत् ।
धर्म्ये स्पर्शे धरन्साम्ये स्थितः प्रारब्धग्राहकः ॥६१॥
रसेद्रसा न्यो रसनेन्द्रियेण
प्रारब्धतः साम्यधिया च तिष्ठेत् ॥
प्रयोजने वेत्तिरसान्समग्रा
न्त्यागत्वमन्तःकरणे विधाय ॥ ६२ ॥
यो वा रसासक्ति मृते यथेच्छं
खादेत्परं मोहधिया प्रमेन्न ।
भोगं तथाऽऽसक्ति मृते प्रकुर्व
न्प्रारब्धतस्तर्हि स योग एव ॥ ६३ ॥
आगच्छतो नासिकया सुगन्धो,
दुर्गन्धकश्चाऽत्र नवेन्न चाऽन्धः ।
साम्येन गन्धग्रहणं प्रकुर्या
त्प्रारब्धतो जीवन मावहेच्च ॥ ६४ ॥
हृष्यात्सुगन्धेन मनो न किञ्चि
दुर्गन्धतो नाऽपि शुचं लभेत ।
न नासिकापौद्गलगन्धतो वै,
सञ्जायते ज्ञानवतां च बन्धः ॥ ६५ ॥

रूपाणि दृग्भ्यां प्रविलोकयन्ति,
न ज्ञानिनस्तत्र भवन्ति लीनाः।
दृश्यानि दृग्भ्यां प्रविलोकयन्ति,
परं न तेषां वशगा भवन्ति ॥ ६६ ॥
दृग्भ्यां विना वासनया प्रपश्यन्,
समश्नुतेऽसौ परमार्थबोधम्।
दृशोश्च रूपाणि हि साधनानि,
धर्मस्तु दृग्भ्यां भवति प्रमाणम् ॥ ६७ ॥
निरीक्ष्य जीवप्रतिपालनार्थं,
दृशाविमौ वीक्ष्य विचारणार्थं
दृशौ सुखार्थं भवतस्तथेमौ,
गुरोश्च देवस्य विलोकनार्थम् ॥ ६८ ॥
दृग्भ्यांच धर्मोऽपि विकाशते वै,
रूपेण बन्धं न बुधा लभन्ते।
साम्येन दृश्यानि विलोकय त्वं,
मोहादिवश्या भव नो कदाचित् ॥ ६९ ॥
अनन्तपुण्यैर्मिलितं हि चक्षुः,
सज्ज्ञानिनां सर्व महो सुखार्थं।
कदाचि दाऽऽकर्णय नापशब्दा
ज्ञानासि चेदाऽऽत्मदशाहितानि ॥ ७० ॥

अधर्म्यशब्दै जंगदस्ति पूर्णं
धर्म्यैश्चशब्दैः सुखसारमस्ति ।
शब्दान्त्यजाऽधर्मविवर्द्धकाँस्त्वं,
शब्दान्शुभा न्नावय चेतसि त्वम् ॥ ७१ ॥
श्रुत्वाऽशुभं द्विष्य सुदर्शने नो
विसह्य निन्दां कुरु कोपनाशम्
शुभश्रुतौ चाथदशासु राग
स्त्यागश्च पश्चाद्भवतीति विद्धि ॥ ७२ ॥
मानापमाने च निशम्य हर्षं,
शोकं नवा चेतसि चानय त्वम् ।
न शब्दसृष्टेः खलु पारमस्ति,
तत्तत्र नाऽसक्ति रये विधेया ॥ ७३ ॥
गुरोश्च देवस्य गुणान् श्रृणु त्वं,
कर्णौ शुभाकर्णनहेतवेस्तः ।
मुक्ति र्भवेदिन्द्रियतोऽपि यश्चे,
चेत्तुर्भार्थ मेवोपयुनक्ति तानि ॥ ७४ ॥
वाण्याऽपि भापस्व शुभं च सत्यं
सुदर्शने ! रक्षयतास्त्वधर्मम् ।
कुरुष्व वश्यानि निजेन्द्रियाणि
सुदर्शने स्वादय चाऽऽत्मसौख्यम् ॥ ७५ ॥

सुखं जयेनैव निजेन्द्रियाणां–
दुःखं वशेनैव निजेन्द्रियाणाम् ।
शुभोपयोगो हि निजेन्द्रियाणां–
सत्कर्मयोगोऽस्ति नमोपदिष्टः ॥ ७६ ॥

योगं न तेषामशुभे कुरुष्व,
प्रारब्धतो धर्मकृते च भोगः ।
सम्यक्तया मां भजतां जनानां,
भवन्ति तत्तद्विषयेन्द्रियाणि ॥ ७७ ॥

ज्ञानाय लब्धानि निजेन्द्रियाणि,
भोगाय जानीहि तथा च तानि ।
शुभोपयोगोऽस्ति यदीन्द्रियाणां–
श्रीजैनधर्मो गुणयोग एवः ॥ ७८ ॥

युञ्जन्ति चित्तं सममाऽऽत्मना ये,
तेषां तु दोषा विलयं प्रयान्ति ।
अनन्तपुण्येन मनो हि लब्धं,
भाग्यान्महत् साधनमस्ति हस्ते ॥ ७९ ॥

मनोऽन्तरा नास्ति निजाऽऽत्ममुक्ति–
स्तस्मान् मनोशुद्धिमहो कुरुष्व ।
आत्माऽस्ति राजा च मनःप्रधानः,
कायोरथो वाजिन इन्द्रियाणि ॥ ८० ॥

अधर्म्यशब्दे जगदस्ति पूर्णं
धर्म्यैश्चशब्दैः सुखसारमस्ति ।
शब्दान्त्यजाऽधर्मविवर्द्धकाँस्त्वं,
शब्दान्शुभा न्नानय चेतसि त्वम् ॥ ७१ ॥
श्रुत्वाऽशुभं द्विष्य सुदर्शने नो
विसह्य निन्दां कुरु कोपनाशम्
शुभश्रुतौ चायदशासु राग
स्त्यागश्च पश्चाद्भवतीति विद्धि ॥ ७२ ॥
मानापमाने च निशम्य हर्षं,
शोकं नवा चेतसि चानय त्वम् ।
न शब्दसृष्टेः खलु पारमस्ति,
तत्तत्र नाऽसक्ति रये विधेया ॥ ७३ ॥
गुरोश्च देवस्य गुणान् शृणु त्वं,
कर्णौ शुभाकर्णनहेतवेस्तः ।
मुक्ति र्भवेदिन्द्रियतोऽपि यश्चे,
च्छुभार्थ मेवोपयुनक्ति तानि ॥ ७४ ॥
वाण्याऽपि भाषस्व शुभं च सत्यं
सुदर्शने ! रक्षयतात्स्वधर्मम् ।
कुरुष्व वश्यानि निजेन्द्रियाणि
सुदर्शने स्वादय चाऽऽत्मसौख्यम् ॥ ७५ ॥

सुखं जयेनैव निजेन्द्रियाणां–
दुःखं वशेनैव निजेन्द्रियाणाम् ।
शुभोपयोगो हि निजेन्द्रियाणां–
सद्धर्मयोगोऽस्ति ममोपदिष्टः ॥ ७६ ॥

योगं न तेषामशुभे कुरुष्व,
प्रारब्धतो धर्मकृते च भोगः ।
सम्यक्तया मां भजतां जनानां,
भवन्ति तत्तद्विषयेन्द्रियाणि ॥ ७७ ॥

ज्ञानाय लब्धानि निजेन्द्रियाणि,
भोगाय जानीहि तथा च तानि ।
शुभोपयोगोऽस्ति यदीन्द्रियाणां–
श्रीजैनधर्मो गुणयोग एषः ॥ ७८ ॥

युञ्जन्ति चित्तं सममाऽऽत्मना ये,
तेषां तु दोषा विलयं प्रयान्ति ।
अनन्तपुण्येन मनो हि लब्धं,
भाग्यान्महत् साधनमस्ति हस्ते ॥ ७९ ॥

मनोऽन्तरा नास्ति निजाऽऽत्ममुक्ति–
स्तस्मान् मनोशुद्धिमहो कुरुष्व ।
आत्माऽस्ति राजा च मनःप्रधानः,
कायोरथो वाजिन इन्द्रियाणि ॥ ८० ॥

आत्मोपयोगे निखिलक्रियाणा-
माचारतो धर्म उदेति पूर्णः।
आत्माऽनुसारं मनसः प्रवृत्त्या,
भवेद्विशुद्धोऽतितरां तदाऽऽत्मा ॥ ८१ ॥
पूर्णो भवेच्चेन्मनसो विकाश-
स्तदा भवेदाऽऽत्ममहाविकाशः।
मनोविकाशाय हि निश्चितं त्वं,
प्राप्तिं च जानीहि निजेन्द्रियाणाम् ॥ ८२ ॥
दयां च दानं च दमं कुरुष्व,
तथाऽऽत्मशक्तीः सहसा लभस्व।
लब्ध्वाऽऽत्मशक्तीः कुरु धर्मकार्यं-
निजाऽऽत्ममुक्तिं च कुरु प्रकामम् ॥ ८३ ॥
चित्तेन्द्रियशरीरैर्हि, आत्मा पूर्णः प्रकाशते।
वाङ्मनःकायसंयोग-आत्मयोगस्तु तद्बलात् ॥ ८४ ॥
ब्रह्मचर्य्यैर्वपुर्वीर्यं, लब्ध्वा धैर्यं प्रकाशय।
आत्मशक्तिरनन्ताऽस्ति, कायशक्त्या प्रकाशते ॥८५॥
नीरोगं रक्ष कायं तद्, योगियोग्यो भविष्यसि।
रक्ष चौपधिवायुभ्यां, योग्यसात्विकभोजनैः ॥ ८६ ॥
अमूल्यं च वपुर्ज्ञात्वा, धर्माऽर्थे देहयोग्यता।
वाचः सारं स जानाति, आत्मशक्तिं समश्नुते ॥८७॥

लक्ष्मीर्यशो वा यदिवापगच्छे-
   त्तदाऽपि सत्यं स नरो वदेद्धि ॥ ९४ ॥
पापानि सत्योक्तिषु नो भवन्ति,
   न्यायोऽपि कश्चिन्न हि सत्यतुल्यः।
ज्ञानं विना सत्यमपि प्रमाणं-
   नैवाऽस्तितज्ज्ञानिजनस्तु विन्ते ॥ ९५ ॥
अन्यायचौर्य्ययोस्त्यागे-र्मयि रागो भविष्यति।
मनोवाणीशरीरार्थे, सत्यं सङ्केतितं मया ॥ ९६ ॥
अस्ति कायान्महाचित्त-माऽऽत्माऽस्ति मनसो महान्।
तत्कर्म सात्त्विकं वेत्ति, सत्यं यश्चोत्तरोत्तरम् ॥ ९७ ॥
कुर्यादिन्द्रियसंरक्षां, यो मनो मयि विन्यसेत्।
आत्मवद्गणयेदन्यान्, मद्भक्तिं स समश्नुते ॥ ९८ ॥
धर्मार्थं वाङ्मनःपुष्टिं, रागरोषौ न धाऽऽरयेत्।
प्राप्तं यत्तत्र सन्तोषो-न दोषं कस्यचिद्वदेत् ॥ ९९ ॥
अशुनं मर्म मा ब्रूहि, विचार्य मधुरं वद।
वर्द्धते निन्दया पापं, नो मद्भक्तिः शुभा भवेत् ॥१००॥
गुरोश्च देवस्य जहीहि निन्दां-
   सुदर्शने जागृहि सद्गुणे स्वयम्।
सदा रिपुभ्यो भव सावधाना
   द्रव्येण भावेन च निर्मला स्याः ॥ ॥ १०१ ॥

क्रुधा समारोपय मा कलङ्कं-
   क्रोधेन मा ब्रूहि तथापशब्दम् ।
संरक्ष विप्रा स्स्वजनान्गुणज्ञे
   संरक्ष तद्वत्पशुपक्षिणस्त्वम्   ॥ १० ॥
अस्ति गोपालने धर्म-आर्य्याणां कर्म तच्छुभम् ।
धेनू रक्ष गृहेकृत्वा, प्रीत्या त्वं हि सुदर्शने ॥ १०३ ॥
पालनेन भवेत्स्वर्गो-गवादिपशुपक्षिणाम् ।
यत्र वासो मृगादीनां, यज्ञयोग्याऽस्ति सा धरा १०४
भवेद्धिंसा गवादीनां, तत्र यज्ञो न जायते ।
स यज्ञदेश आर्याणां, मज्ज्ञानं यत्र जायते ॥ १०५ ॥
पालयन्ति गवादीन्ये, स्वस्तेषामायुषः क्षये ।
यत्र गावो निहन्यन्ते, तत्र काचिन्न यज्ञता ॥१०६॥
यज्ञेषु पशुनाशेन, दुःखे वासस्तु निश्चितः ।
यत्र हिंसा ततो यज्ञो, नास्ति शिक्षां प्रमाणय १०७
ये ब्राह्मणक्षत्रियवैश्यशूद्रा-
   रक्षन्ति गास्ते सुखिनो भवन्ति ।
एषाऽऽर्यरीतिः कथिता त्वदर्थं,
   तद्वर्तने कार्ऽपि न पापभीतिः   ॥ १०८ ॥
समाजदेशयो र्गावो, धनानि महिपादयः ।
रक्ष्यन्ते तत्र नोत्पाता-मानवा दधते सुखम् ॥१०९॥

उक्त्वा कुरु न तत्सङ्गं, कुरु मा दुष्टसङ्गमम् ।
विश्वसीहि न दुष्टेषु, मा दासो व्यसनी जन॥१२८॥
व्यसनाद् दुर्गुणाद् दूरं, वसतां मुक्तिरुद्भवेत्,
अन्यायेन न धर्मः स्या–न्न श्रेयः पक्षपाततः॥१२९॥
आत्मवद्यत्र नीतिः स्या–त्तत्र मच्छक्तिरुल्लसेत् ।
यत्र विश्वासिघातो न, तत्र पुण्यप्रभोदयः ॥१३०॥
यत्र किञ्चिन्न भेदोऽस्ति, सत्यैक्यं यत्र पाल्यते ।
देशराज्योभयोर्वृद्धिः, स्यादानन्दो गृहे गृहे ॥१३१॥
सम्मतिर्यत्र राज्येषु, तत्र शान्तिश्च वर्तते ।
प्रामाणिका यतो जैना–वृद्धिः स्यात्तत्र सर्वतः १३२
न कुर्यादपरस्येर्ष्यां, वृत्तिर्यत्राऽस्ति सात्त्विकी ।
ज्ञायन्ते सरला दार्य्या, आर्य्य भूमिस्तु धर्मतः ॥१३३॥
विश्वासो मयि यस्याऽस्ति, स आनन्दं समश्नुते ।
संशयाऽऽत्मा भवेन्नष्टः, प्रकाशन्ते न शक्तयः ॥१३४॥
नास्तिकैः सह वासेन, श्रद्धा नश्यति तत्क्षणात् ।
अश्रद्धाया गुणाभावो, विनश्यन्ति प्रकाशिताः १३५
नाऽश्रद्धया फलेन्मंत्रं, कार्यसिद्धि र्न तां विना ।
मयि श्रद्धालवो भव्या, लभन्ते सकलान्गुणान् १३६
तर्कादयः प्रमाणानि, सन्त्यश्रद्धालुबोधने ।
श्रद्धाप्रमाणमुत्कृष्टं, बहुशक्तिगुणाकरः ॥ १३७ ॥

श्रद्धाप्रेमस्तु मद्भक्ति-र्न भक्तिः संशयास्पदे ।
शुद्धप्रेम्णाऽस्ति मद्दृष्टि-र्दैवी सृष्टिस्ततो भवेत् १३८
श्रद्धाप्रेमबलाद्भक्ति-स्तामृते निष्फलं तपः ।
श्रद्धालवो नरा नार्य्य-स्तेषामत्र फलं भवेत्॥१३९॥
श्रद्धालवो नरा नार्य्य-स्तत्र मन्नामकीर्त्तकयः ।
श्रद्धाप्रेमैव मद्रूपं, तद्विना दुःखमुद्भवेत् ॥ १४० ॥
मन्नाम्ना भजते मां यः, सर्वशक्तीः समश्नुते ।
मन्नाम्ना यत्र रागः स्या-त्तोऽभङ्गः सर्वकर्मसु ॥१४१॥
मयि श्रद्धातिरागी यो-महाभाग्यमवेहि तम् ।
मत्प्रेमिणश्च ये जैना-स्ते जयं चाऽत्र विन्दते ॥१४२॥
बुद्धिवादं परित्यज्य, सत्कार्य्यप्रेममानसा ।
भूत्वा मदाज्ञया गच्छ, पश्याऽऽत्मानं सुदर्शने ॥१४३॥
बाह्यान्तर्वर्तनं चैकं, मद्भक्तानां सुनिश्चयः ।
सत्यं विवेकमाधाय, वर्त्तते चतुरो जनः ॥ १४४ ॥
आसक्तिं विषये नैव, सत्कर्म नित्यमाचरन् ।
अतिभोगेन रोगः स्या-दात्मनिर्बलता भवेत् १४५
धर्म्यभोगेन योगस्य, साधना मम रागिणाम् ।
आप्नुवन्ति न ते शोकं, विशालदृष्टिधारकाः १४६
गाम्भीर्यमुद्भितः पूर्णं, मिच्छा दुर्व्यसनस्य नो ।
नेच्छन्ति मां विना किञ्चि-ल्लभन्ते भक्तिमीदृशाः १४७

नाम्नि रूपे त्यजेन्मोहं, न द्रुह्यादुपकारिणे ।
स्वस्वातन्त्र्यं सदा रक्षे-त्पारतन्त्र्यं सहेत न ॥१४८॥
जगन्मान ममानं च, तत्र ध्यानं न धारयेत् ।
बन्धे कोऽपि न धर्मोऽस्ति, अधर्मः प्रतिबन्धने॥१४९॥
विषयेषु न बद्धा ये, जीवन्मुक्ता भवन्ति ते ।
असन्मानंच नाकांक्षे-द्वित्तानुसारदानवान् ॥१५०॥
इच्छा स्वकीयाऽस्ति भवस्य मूलं,
तृष्णा तथाऽशा भवदुःखमूलम्
करोति यो वाऽऽत्मवशां निजाशां,
भूत्वा स भक्तो मम शान्तिमेति ॥ १५१ ॥
मुह्यन्ति लोकेषु न चाशया ये,
स्तवेषु निन्दासु समा भवन्ति ।
ते योगिनः कर्मकृतो मदीयां,
लीलां लभन्ते भवमुत्तरन्ति ॥ १५२ ॥
भक्तेषु मे मरमम एव राग-
स्तथैव भक्ता मम भाग्यवन्तः ।
दोषेण युक्तोऽपि भवेददोषी,
रोषेषु यो वै कुरुतेऽतिरोषम् ॥ १५३ ॥
सुदर्शने कुप्यति यश्च कोपे,
मानेषु मानी प्रतिजायते यः ।

कापट्यकर्ता कपटेषु यः स्याद्,
भूत्वा प्रलोभी प्रणिहन्ति लोभम् ॥ १५४ ॥

कुर्य्याश्च मोहादिषु शत्रुभावं,
स्वतंत्रताया मिति सद्विलासः ।
कुर्वन्त एवंविधकर्मजक्री,
जैनाः सदा शुद्धसुखं लभन्ते ॥ १५५ ॥

अनन्तशक्तिस्त्वयमात्मदेव--
श्चित्तेन कुर्वीथ निजाऽऽत्मसेवाम् ।
आत्माऽर्थ मन्यान्यखिलानि कुर्य्या--
स्त्वंजिनधर्मो लभते स्वराज्यम् ॥ १५६ ॥

कुर्य्याज्ज्ञात्वा शुभं कर्म, मृषाबन्धं परित्यजेत् ।
वर्तमानं शुभं कर्म, कुर्याल्लज्जां नवाऽऽचरेत् ॥१५७॥

मागा भयं दुर्जननिन्दया त्वं,
शुभानि कर्माणि विधेहि भावैः ॥
स्वीयं तु जानीहि मनस्तु सत्यं,
त्वं धेहि रीतीस्तु महाजनानाम् ॥ १५८ ॥

विशालदृष्ट्या कुरु सर्वकार्य,
मृषावचो विद्धि न चैव सत्यम् ।
विशन्ति सत्यानि तु जैनधर्मे,
न जायतेऽसत्यतयाऽत्र शान्तिः ॥ १५९ ॥

निर्दोषिणः पीडय नो कदापि-
च्छ्रीजिनधर्मं त्वमवेहि सत्यम् ।
अशक्तिकान्पीडय मा कदाचिद्,
भूत्वोद्धता नो पतिता भवन्तु ॥ १६० ॥

निरागसो दण्डय नो कदाचि,
च्छिरस्तु कृत्वा च शृणु मदाज्ञाम् ।
काँश्चिन्न किंचिन्ननु वञ्चय त्वं
विधाय नर्णं कुरु किंच कार्यम् ॥ १६१ ॥

अत्यंतपापं च यतोऽस्ति देशे
सर्वा विपत्तिः समुदेति तत्र ।
अन्यायिनां स्याः प्रतिपक्षकर्त्ता,
न्यायेन सत्येन बलेन पूर्णः ॥ १६२ ॥

स्वप्राणरक्षाय सुदर्शने त्वं,
न निर्बलीभूय जहीहि लज्जाम् ।
मृतिर्भवेत्किंतु जयं भवेन्न-
एवं हि जैना जगति स्थिराःस्युः ॥ १६३ ॥

कस्याप्याऽऽगो न कर्तव्यं, मा स्पर्धस्वोत्तमैः सह ।
कुरु नो दुष्टविश्वासं, दुष्टदासो न वा भव ॥ १६४ ॥
सत्यशिक्षां श्रुतौ न्यस्य, त्यक्त्वा द्वेषापमानने ।
सहस्व देवगुर्वर्थं, संघार्थं जीवनं वह ॥ १६५ ॥

विनयं कुरु वृद्धाना-मन्तर्दोषं निवारय ।
प्रमाणं कुरु साधूनां, मद्याम स्मर भावतः ॥ १६६ ॥
ज्ञानादिभिर्महान्योऽस्ति, तस्य त्वं विनयं कुरु ।
जैनधर्मस्य मूलं हि, विनयं विद्धि निश्चितम्॥१६७॥
गृहाण विनयैर्विद्यां, शक्तीश्च विनयैः पुनः ।
विनयेन श्रुतप्राप्ति-र्गर्वोऽज्ञाने च गच्छतः ॥१६८॥
सद्रागो मातृपित्रादौ, विनेयानांहि मुक्तये ।
गुरोर्विनयतो ज्ञानं, वृद्धिवेला प्रजायते ॥ १६९ ॥
क्लेशका यत्र तत्रैव, पशवो विनयादृते ।
नश्येद्धि विनयात्पापं, मत्प्रेमा विनयं धरेत् ॥१७०॥
संशोभते नो विनयं विना जनः,
स्वच्छं न चित्तं विनयं विना भवेत् ।
अवाप्यते यद्विनयात्सुदर्शनं,
नोवाप्यते तत्कृतकोटद्युपायतः ॥ १७१ ॥
सेवस्व जीवमात्रं त्वं, दृष्टा विनयकर्मसु ।
वन्दस्व महतां पादौ, सोत्साहा स्या गुणप्रदे॥१७२॥
प्रीत्या च कुरु सत्कारं, पृच्छाऽथ कुशलादिकम् ।
उपकुरु विना स्वार्थं, परार्थं जीवनं वह ॥ १७३ ॥
स्वार्थं विनोपकुर्वन्तः, शोकं गृह्णन्ति नो नराः ।
स्वार्थं प्रत्युपकाराय, तत्र नो परमार्थता ॥ १७४ ॥

स्वार्थादयो न सिद्ध्यन्ति, पश्चात्ताप स्तदा भवेत्।
परमार्थफलं नरस्या–न्निष्फलं स्याच्च जीवनम्॥१७५॥
स्वार्थं विनोपकुर्वन्ति, ये ते धन्यतमा नराः।
मत्स्वरूपं लभन्ते ते, कोऽपि नास्त्यत्र संशयः १७६
मदाज्ञया नरा नार्य्य–उपकुर्वन्तु भावतः।
लभंतां परमां मुक्तिं, विश्वासीभूय कुर्वताम् १७७
आशा नश्यति पुत्रादि–सेविनां स्वार्थमन्तरा।
निःस्वार्थसेवया भक्त्या, स्वाऽऽत्मधर्मः प्रकाशते १७८
परोपकारशीलाये, कीर्तिमानेच्छया विना।
उद्यता उपकाराय, स्वाऽपमानं विषह्य च॥ १७९॥
बध्यन्ते ते न मायायां, निःसंङ्गज्ञानसंयुताः।
मुक्तिधाम लभन्ते ते, तरन्ति भवसागरम् ॥१८०॥
इच्छेत्प्रत्युपकारं नो, धन्यास्ते हि नराः स्त्रियः।
भेदभावो न चित्तेषु, चोपकारोऽस्ति शत्रुषु ॥१८१॥
उपकर्तुं मनःप्राण,–वित्तकायबलादिकम्।
अर्पयन्ति समग्रं ये, लभन्ते मत्पदं सुखम् ॥१८२॥
सर्वोपकाररूपोऽस्ति, जैनधर्मस्तमाचर।
उपकृत्य वदेद्यश्च, स मायाबन्धने स्थितः ॥१८३॥
नामरूपेषु निर्मोहा शुभदानविधायिनः।
ज्ञानदानसमं नान्य–दाऽऽत्मदानं तु सौख्यकृत् १८४

उपकारा अनेके ये, यथाशक्तिसुखप्रदाः ।
नैसर्गिकोपकारश्च, प्रकृत्या तस्य जायते ॥१९५॥
जीवन्मृता भवन्त्येते, ये लोका अपकारिणः ।
योगं क्षेमं च ते यान्ति, मच्छ्रद्धाप्रेमधारकाः ॥१९६॥
उपकारैर्यथा भाव–स्तथा धर्मोऽपि वर्द्धते ।
वैरशान्तिस्तथा धर्म–वृद्धिः स्यादुपकारतः ॥१९७॥
दुःखिरोगिजनोद्धारं, कर्तुं भवन्तु तत्पराः ।
उपकारोहि वीराणां, धर्म एवाऽस्ति वर्णिनाम् ॥१९८॥
कुरु यात्रार्थिनां शालां, दानं देह्यन्नयादिकम् ।
पशुपक्षिनृणां दुःख–नाशेन त्वं सुखी भव ॥१९९॥
भजन्ति नाम मे ये च, हृदि तेषामुपग्रहः ।
परमार्थपरा भक्ताः, स्वार्थं जानन्ति तत्र हि ॥२००॥
तत्रोन्नतिः सुखं शान्ति–र्जैनधर्मो भवेद्यतः ।
हिंसादिदोषनाशःस्या–त्सन्तोषः सर्वदेहिषु ॥ २०१ ॥
बुद्धिसत्त्वादिशुद्धिः स्या–त्सर्वस्याच्छान्तिकारणम् ।
विस्तृते जैनधर्मे च, सर्वं पापं विनश्यति ॥ २०२ ॥
समाजदेशयोर्शुद्धि–र्जैनधर्मस्य सेवने ।
जैनधर्मेऽखिला धर्माः, कुरु कर्माणि निश्चयात् ॥२०३॥
पालयेद्देशानां मैत्रे–त्सुखं देशसमाजयोः ।
जैनधर्मवृद्धिपाशाने, यत्र स्तथ ततः सुखम् ॥ २०४॥

वेश्यापराङ्गनासक्ता–ये ते चर्मानुरागिणः ।
ये मुग्धाश्चर्मरङ्गेषु, चर्मकारा भवन्ति ते ॥ २१५ ॥
चर्मकारास्तु मद्रूपं, ते न पश्यन्ति मन्मद्दृः ।
मयि रक्ताश्च ये जीवा–लभन्तेऽनन्तजीवनम् ॥२१६॥
व्यभिचारं च संहृत्य, ब्रह्मरूपे मयि स्थिताः ।
व्यभिचारनिरा नार्यः, सत्यं तत्प्रेम नो मयि २१७
सर्वशक्तेर्भवन्भ्रष्टो–नाशयन्त्यखिलान्गुणान् ।
दुःखकालस्य दासः सन्, देशसंघविनाशकः ॥२१८॥
अनेकानिष्टरोगैः स,–पापे देशप्रजां क्षिपेत् ।
व्यभिचारं रुजागारं–विद्धि द्वारमयोगतेः ॥ २१९ ॥
दुःखपरम्परादायी, व्यभिचारोऽतिकुत्सितः ।
व्यभिचारविचारेण, स्वऽपारं दुःखमुद्भवेत् ॥२२०॥
व्यभिचारस्य न प्रेम, योगक्षेमौ ततः कुतः ।
ब्रह्मचर्येण देशस्य, समाजस्य तथोन्नतिः ॥ २२१ ॥
व्यभिचारेण पातः स्या–द्विश्वासो मयि नोद्भवेत् ।
व्यभिचारसमं पापं, शापश्चाऽपि न तत्समः ॥२२२॥
व्यभिचारी स्थिरो न स्या–न्निपते दुःखयोगतः ।
ब्रह्मचर्यं हि मच्छक्ति–र्धृतायां शक्तिरुद्भवेत् ॥२२३॥
ब्रह्मचर्यसमो धर्मो, नोपकारसमा क्रिया ।
देहवीर्यं च रक्ष त्व–माऽऽत्मवीर्यं प्रकाशय ॥२२४॥

भावप्रमाणसाहाय्यं, मत्कृतं विन्दते जनाः ।
विना रूपाभिधोपाधीन्, रमन्ते मयि ये जनाः २३५
लभन्ते ब्रह्मचर्येण, ब्रह्म तद्धाम मामकम् ।
नास्तिकैः सह संगेन, शीलनाशो भवेद्ध्रुवम् ॥२३६॥
नान्तर्वन्धं वह त्वं च, मयि चित्तं निवेशय ।
कोटिलिप्स्वावलोकेन, व्यभिचारी न मज्जनः ॥२३७॥
भूत्वा मज्जनाऽऽसक्ता जीवन्तु ब्रह्मचर्यतः ।
सर्वत्र मत्समं भावं, धृत्वैक्यं च प्रवर्ततात् ॥२३८॥
आत्मदाने हरन्भेदं, संघादावेकतां कुरु ।
मत्संघ ऐक्यमारूढो–धर्मवृद्धिं करोतु सः ॥ २३९ ॥
दत्वा च स्वार्थभोगाँस्त्वं, विधेहि योगसाधनम् ।
मां निर्भेदेन सेवस्व, त्यज संकुचितान्मतान् ॥२४०॥
नरा नार्यः क्रियाज्ञाने–र्वर्तन्तां स्वस्वभावतः ।
देशप्रजासुखे सौख्यं, तद्दुःखाद्दुःखमाऽऽत्मनः॥ २४१ ॥
ज्ञात्वैकीभूय वर्तन्तां, मिथ्यागर्वं विधत्त न ।
राज्यं सत्तां धनं देहं, संघश्रेयाय विसृज्यत ॥२४२॥
भेदवन्मतमुन्मुच्य, जैनधर्मं भजस्व च ।
विश्वासो मयि सत्प्रीति–र्जैनस्येतिलक्षणम् ॥२४३॥
मतक्रियादिभेदाँस्तान्, त्यज त्वं संघगतः ।
विचार्य वर्तने संघ–ऐक्यं मच्छासने गुणः ॥ २४४ ॥

संघैक्ये वर्द्धते धर्मो–भेदेनाऽधर्म उद्भवेत् ।
अभेदैरैक्यशुद्धिः स्या–द्वद्धिर्विया वलं मतिः ॥२५३॥
सर्वप्रजासु यत्रैक्यं, तत्रैकोऽस्मि विराडहम् ।
ऐक्यं सेवस्व मत्प्रेम्णा, चेदं हानिकृतं त्यज ॥२५४॥
उच्चनीचो न वा ज्ञेयो, नृजातो लिङ्गभेदतः ।
आत्मभावं समादाय, निश्चयेनैक्यमाचर ॥ २५५ ॥
न नामरूपेषु विमोहनीयं,
संघैकताया इदमस्ति गुह्यम् ।
रूपाभिधामोहनिवारणं च,
सुदर्शने धारय मत्सुशिक्षाम् ॥ २५६ ॥
नामोपाधिभिदं त्यक्त्वा, विद्ध्याऽऽत्मानं तु सत्तया ।
सर्वाऽऽत्मा सत्तया त्वेको–ऽवेहि व्यापकभावतः २५७
विद्धि सर्वान्नराँस्तुल्या–न्नामरूपे न मानय ।
नामरूपेषु नो खिन्द, खेदं निस्सारयैक्यतः ॥२५८।
मोहं विस्मृत्य मल्लीना, एकभावेन मां वह ।
ऐक्ये धर्मस्त्वभिन्नोऽस्ति, विद्ध्याऽऽत्मनि सुदर्शनं २५९
सर्वाऽऽत्मान श्च तुल्याः, कश्चिद्भेदो न तत्र हि ।
आत्मदृष्ट्या वसैक्ये त्वं, लभन्तां मनुजाः सुखम् २६०
कुरु कर्मैक्यतः सर्वं, मन्तर्निष्कामवृत्तिना ।
संघस्यैक्योपयोगं तु, लोका दुष्टं विधत्त न ॥२६१॥

आचार्यसंघसाधूनां, मानं प्रेम परं मयि ।
कुरु साधर्मिणां सेवा–मीर्ष्याद्वेषौ न धारय ॥२७२॥
यतेः कोऽप्यपमानेऽपि, मानं साधर्मिणो न चेत् ।
सहस्व तदपि स्वान्तः, संघतत्त्वे मनः कुरु २७३
विचार्य देशकालाभ्यां. विद्धि संघं तु मन्ममम् ।
संघं पूजय सेवस्व, क्षणात्कर्माणि संहर ॥२७४॥
संघरक्षणवृद्ध्यर्थं, स्वसाम्राज्यार्पणं कुरु ।
संघसेवैव मत्सेवा, पुण्यं फलति तत्कृतौ ॥ २७५ ॥
कालानुसारतः संघो–नीती रचयते शुभाः ।
राज्यनीतिसमा संघ–नीति स्तां वह कालतः २७६
क्रियाकालानुसारेण, त्यागिनां परिवर्तते ।
तुल्यान्वहेद्गुणान्नीत्या, क्रियायां परिवर्तनम् २७७
संघाधीनं हि जानन्ति, प्रवीणाः परिवर्तनम् ।
सँस्कुर्वन्ति महासंघा–जैनानां वर्द्धते गुणः ॥२७८॥
स्वातन्त्र्यं स्याच्च जैनानां, वर्द्धन्ते वलबुद्धयः ।
निश्चयव्यवहाराभ्यां, वलिसंघो हि वर्द्धते ॥२७९॥
मच्छ्रद्धया विना नाऽस्ति, गति र्नास्ति तथा मतिः ।
मच्छ्रद्धया विना नाऽस्ति, योगो वा सुखमुत्तमम् २८०
मां चित्ते न्यस्य यः कुर्य्या–त्संघो भक्त्याऽश्नुते सुखम् ।
संघानामपमानेन, स्वपमानं ध्रुवं मम ॥ २८१ ॥

यो द्वेष्टि मम संघेभ्यो–दुर्गतावुद्भवेत्स च ।
गृहस्थत्यागिनां भक्तिः, संघशक्तिं तनोति च ॥२८२॥
जना ये सर्ववर्णानां, भेदस्तत्र न कश्चन ।
संघो हि सर्ववर्णानां, महाँस्तं भज तन्मयः ॥२८३॥
मुख्यादिव्यवहाराणां, प्रेम्णा निर्भेदमाचर ।
सर्वसंघस्य यो मुख्यः, सम्मानं तस्य सत्समम ॥२८४॥
गुणैरग्रेसरः कार्यो–मा मन्दं कुरु नायकम् ।
गुणवान्सर्वतः श्रेष्ठो–यश्च सर्वकलानिधिः ॥ २८५ ॥
न पक्षाऽपक्षतां धेहि, तादृगग्रेसरं कुरु ।
नीतिं सम्मिल्य कुर्वन्तु, संघा ये देशराष्ट्रयोः ॥२८६॥
व्यापारं व्यवहारं च, प्रवर्तयत सर्वदा ।
मम भक्तो न भेदोऽस्ति, सर्वे तुल्या हि मानवाः २८७
संघैक्यं विश्वलोकानां, सर्वैकः सत्याऽग्रपदम् ।
विपद्यन्ति तथाऽऽपद्यन्ति, शाश्वा चित्ते शुभं वद २८८
सुखं स्यात्संघोत्पत्तिः, सर्वं दुःखं विनश्यति ।
सेवस्व जीवतो भव्या, गुणान्पश्य गुणान् वद २८९
न पश्य दोषलेशं च, मनःक्लेशान्निवारय ।
कुर्वेऽनर्थं त्यज निन्दां च, गुणान्दृष्ट्वा गुणान्वद २९०
गुणानुरागिणस्सन्त–आत्मनो मम कीर्तने ।
गुणाकरो महासंघो–महात्मा यश्च रक्षति ॥ २९१ ॥

विचर तीर्थसेवायै, महासंघं विलोकय ।
संघयात्रां प्रकुर्वन्तु, सेवन्तां भोजनादितः ॥ २९२ ॥
कुरु संगं सुसाधूनां, तरन्तु भववारिधिम् ।
जैनधर्मविनाशाय, परधर्मी यतेत चेत् ॥ २९३ ॥
धर्मयुद्धं तदा कार्यं, शस्त्राद्यैर्बलतस्तथा ।
कुरु व्यर्थं नवा युद्धं, क्रुद्धो न स्या अकारणम् २९४
एकीभूय सहस्व त्वं, शिक्षणानि लभस्व च ।
समर्पयत चाऽस्मानं, न मोहं संशयं कुरु ॥ २९५ ॥
ये संकीर्णविचारा हि, संघाऽधोगतिकारकाः ।
स्वातन्त्र्यस्य च हर्तारो–दूरं वसत तत्ततः ॥ २९६ ॥
नव्यजीवनवोद्धारो–विशालाऽऽचारबुद्धयः ।
विश्वस्मिन्व्यापका ये च, तानाचरत हेजनाः॥२९७॥
जीर्णाः संकीर्णतां प्राप्ता– मलीनाः शक्तिनाशकाः ।
अधर्म्याः पातकर्तार–स्तानाचारान्विमुञ्चत ॥२९८॥
शिक्षणं जैनधर्मस्य, लभन्तां प्रेमतो जनाः ।
याच संघेषु मे भक्ति–र्नीतिशक्ति तनोति सा ॥२९९॥
यत्र संघे ममाज्ञाऽस्ति, कल्याणं तत्र वर्तते ।
यत्र संघेऽस्ति मे गान–मनुभूतिस्तथा सुखम्॥३००॥
यत्संघानां मयि प्रेम, योगक्षेमौ ततो ध्रुवम् ।
कल्याणकोटिमयो यत्र, तत्र दुःखं न जायते ॥३०१॥

प्रख्याता बालके तात-गुरुमात्रनुसारिता ।
माता शिक्षकतुल्याऽस्ति, पाठयन्ती सुतान्गृहे ३११
बाल्ये विहितसँस्कारा-स्तादृशाःसारउद्भवेत् ।
पितरो भाविनो बालाः, शिशुरेव महद्धनम् ॥३१२॥
बालो भूपस्तथा देवो-बालकान्नज शिक्षणैः ।
देशोदयोधनं बालो-नानाजापां च शिक्षय ॥३१३॥
विद्यचित्तवपुश्शक्ति-र्बाले व्याप्नोति वेगतः ।
गुणिपुत्रास्ततः स्वर्ग-देशद्रव्याणि बालकाः ॥३१४॥
बालसंघोदये याते, दुष्कृत्यं याति दूरतः ।
बालकान्कुरु वीराँस्त्वं, संगृहाण स्वतन्त्रताम् ॥३१५॥
उत्सर्गेणोदये धर्म-श्चापद्धर्मस्तु सङ्कटे ।
धर्मा उन्नतिकर्माणि, जायते शर्म तत्कृतौ ॥३१६॥
नीतिज्ञानं च बालानां, कर्मज्ञानं च शिक्षय ।
ज्ञानं च सर्वधर्माणां, तेन सच्छक्तिरुद्भवेत् ॥३१७॥
यच्छक्तिस्तस्य राज्यं स्या-त्साहाय्यं कुरु शिक्षणे ।
जैनधर्मस्य रक्षायां, प्राणार्पणसुशिक्षणम् ॥ ३१८ ॥
न भयैः परतन्त्रः स्या-त्क्रियाज्ञाने स्वतन्त्रता ।
प्राणान्ते न त्यजेन्न्यायं, स्वधर्मव्रतपालकः ॥३१९॥
दुष्टैः पराजितो न स्या-देवं बालो यतो भवेत् ।
धर्मराज्यं ततो विद्या,-सुखं सम्यक्स्वतन्त्रता ३२०

कुरु देवसमान्बाला–न्वृणु निर्भिस्वतन्त्रताम् ।
वसं विद्याऽथ साम्राज्यं, जैनधर्मस्य जायते ॥३२१॥
भोगः शक्तिर्दया दानं, बालसंघे निरोगिता ।
दुर्गुणव्यसनाद्दूरं, तत्र शक्तिः प्रजायते ॥ ३२२ ॥
बाले स्वतन्त्रता प्रेम, विद्यारोग्यबलानि च ।
सर्वनीतिकलास्ताभि–र्मिथ्यागर्वो न जायते ॥३२३॥
स्थित्वा गुरुकुले विद्यां, विद्यार्थी सेवयाऽऽप्नुयात् ।
धर्माचार्ये विनीतः स्या–त्कदाचिन्न वदेन्मृषा॥३२४॥
लभेत विनयाद्विद्यां, धर्माचार्यं च सेवयेत् ।
ज्ञापयेद्गुरुदेवस्तं, मानवानां शुभाः क्रियाः ॥३२५॥
जैनधर्मस्य वेदाँश्च, रहस्यं ज्ञापयेत्स्फुटम् ।
बालिकाः शिक्षयेदेवं, विनयं प्रेमसेवनम् ॥ ३२६ ॥
लीपिभाषाक्रियाज्ञानं, नानाज्ञानं च शिक्षयेत् ।
शिक्षयेत्तं स्मरेयाव–द्विद्यार्थी जायते महान् ॥३२७॥
विद्यार्थिगुरुसाहाय्या–ज्जायते सत्यमुन्नतिः ।
पूज्योपकारको देवो–धर्माचार्योऽस्ति शीर्षवत्॥३२८॥
हस्तौ बध्वा प्रणम्योऽसौ, ध्यानं धर्मगुरोः कुरु ।
पठ सर्वकलाः प्रेम्णा, गुरुतः स्वानुभूतितः ॥३२९॥
विद्धि गुरुकुले वासं, बालानामष्टवर्षतः ।
वसेयुर्ब्रह्मचर्येण, गुर्वीपार्श्वे च बालिकाः ॥ ३३० ॥

योग्यावस्थासु लग्नं स्या-त्सत्यं प्रेम यतो भवेत् ।
यत्राऽऽत्मा गुणकर्मभ्या-मेको लग्नं तदुच्यते ॥३३१॥
एकता यत्र चान्योन्यं, तल्लग्नं प्रणयात्मकम् ।
गुणान्विना यतो लग्नं, विघ्नास्तत्र भवन्ति हि॥३३२॥
नाधर्म्यकामतो लग्न-मात्मैक्ये लग्नमुत्तमम् ।
शुद्धप्रेम यतश्चाऽस्ति, तल्लग्नमवधारय ॥ ३३३ ॥
लग्नं गुणं विना हेयं, सत्सख्ये लग्नमुत्तमम् ।
प्रीतिं विना दहेच्चित्तं, नेच्छालग्नं ततः कथम्॥३३४॥
पत्नी दासी पतिर्दास-औदासीन्यं ततो द्वयोः ।
मयि यत्र न विश्वासः, का लग्नाशा ततो भवेत् ३३५
देहलग्नं पशोस्तुल्यं, मेलो न गुणकर्मणाम् ।
नोन्नतिः पशुलग्नेन, शुद्धप्रीत्या सुखं हितत् ॥ ३३६ ॥
स्वार्थः परस्परं यत्र, न यत्र परमार्थता ।
यत्राऽधार्मिककामाशा, तत्र पत्नी न वा पतिः ३३७
पृथक् कीर्त्यभिलापः स्या-दपमानं सहेत न ।
भवेदन्योन्यतो निन्दा, तत्र लग्नं न शोभते॥३३८॥
परस्परं मनोभेदः, खेदः क्लेशस्तथा भवेत् ।
नान्योन्येषु मिलेच्चित्तं, तत्र किं लग्नमुत्तमम्॥३३९॥
व्यभिचारो यतो लग्ने, सुखिनो न नरास्ततः ।
गुणकर्म विना पुत्रा, जायन्ते दासदुःखिनः ॥३४०॥

नीरोगी न तयोर्देहो–बलं बुद्धिर्न वा यतः ।
धर्मप्रेम न वा नीति–स्तत्र का लग्नयोग्यता ॥३४१॥
पतिधर्मो भवेत्पत्यौ, पत्नीषु गुणकर्मणी ।
संस्कारात्सहजाद्द्वयं, तत्र प्रणययोग्यता ॥ ३४२ ॥
धनाः पतिव्रताधर्माः, शुद्धप्रेम तदादिकम् ।
पतिचित्ताऽनुसारेण, पत्युर्या सहचारिणी ॥ ३४३ ॥
नाऽन्यपुंसा स्मरेद्भोगं, पत्युर्या सहचारिणी ।
पत्यौ प्रेम शुभा दृष्टि–र्धर्मार्थं व्यक्तिसर्जनम् ॥३४४॥
या भूत्वा पतिरूपिणी स्वमनसः, कृत्वा स्वतां दूरतः,
श्रीपत्युर्गुणसौष्ठवं ह्यभिलषे–त्सैवार्यनारी भवेत् ।
मर्यादां प्रतिपालयेन्निजपतौ, नारोपयेद् दूषणं,
निन्देन्नापि पतिं कदापि दयिता, पत्यौ मनो वेशयेत् ३४५
पत्या सार्द्धं या सुखे वाऽस्ति दुःखे,
घोरापत्तौ स्वाऽपमाने सहेत ।
पत्नी सत्यं वर्तते गेहदेवी,
पत्या सार्द्धं विग्रहं नाऽऽचरन्ती ॥ ३४६ ॥
सत्कुर्वन्ती पतिं प्रीत्या, कथयन्ती न वा पतिम् ।
बालाँश्च पालिका रक्षे–त्कुटुम्बादिप्रपालिनी ॥३४७॥
सन्तुष्य संस्मरेद्या मां, यथाऽऽयं व्ययमाचरेत् ।
मनोवाक्कायतो दुःखं, नार्पयेत्सुखमाहरेत् ॥ ३४८ ॥

वञ्च्या न परपुंसा स्या–च्छीलं रक्षेत्सुखप्रदम् ।
न मुह्येच्चर्मरङ्गेन, शिक्षां मे या च मानयेत् ॥३४९॥
कर्मणा यो मिलेद्भर्ता, तत्रैव प्रीतिमाचरेत् ।
पत्यौ धर्मेच्छया रागं, त्यागं चापि विवर्द्धयेत् ३५०
वैराग्यं प्रतिरागं च, धर्म्यकामा समाचरेत् ।
मिथ्या कटु च न ब्रूया–दुपालम्भान्सहेत सा ३५१
पत्युश्चिन्तां च जानीया–द्बोधयेत्तत्सहायकृत् ।
पत्याऽऽत्मनाचरेत्प्रेम, पतिसौख्यं च कामयेत् ३५२
गोपयेत्पतिमर्माणि, तद्विश्वासं न खण्डयेत् ।
श्वश्रूश्वशुरसन्मानं, गुरुसाधुगुणान्रटेत् ॥ ३५३ ॥
मिथ्याग्रहाँस्त्यजेत्सर्वान्, गम्भीरा मां व्रजेत्परम् ।
विस्मरेन्न सुखे दुःखे, चाभ्यस्येदपि साम्यतः ॥३५४॥
न त्यजेज्जैनमर्यादां, सत्याऽसत्यं विचारयेत् ।
प्राणान्तेऽपि त्यजेन्नैव, धर्मं कुर्याद्गृहक्रियाः ॥३५५॥
सरागा प्रतिवेश्मिन्यां, परनिन्दां न वाऽऽचरेत् ।
गुणार्जने कृतप्रीति–र्भक्तिर्मूर्तिमती यथा ॥ ३५६ ॥
बालकं पालयेत्प्रेम्णा, विद्यां नीतिं च शिक्षयेत् ।
सत्यं ब्रूयात्प्रियं ब्रूया–द्धर्मे पातिव्रते दृढा ॥३५७॥
वैद्यकज्ञौषधं कुर्याद्, गृहे सद्वस्तु पूरयेत् ।
विद्याद्गृहस्थितिं सर्वां, समाना सुखदुःखयोः॥३५८॥

उदारं स्वमनः कुर्या–त्पतितुष्टया च शान्तिजाद् ।
मनो वाणीं च संयच्छे–न्नोद्धता स्वेच्छया चलेत्३५९.
दीर्घदृष्टया चरेत्कर्म, चाऽऽत्मसौन्दर्य मर्थयेत् ।
दध्याद्‌गुणमहाशोभां, क्लेशं कुर्यान्न कोविदा ॥३६०॥
पालयन्ती स्वयं बालं, सेवयेत्पशुपक्षिणः ।
बालवृद्धरुजार्तांश्च, यथाशक्ति सुसेवयेत् ॥ ३६१ ॥
स्यात्कदाचित्पतिः क्रुद्ध–स्तदा ब्रूयान्न किंचन ।
उचितावसरं ज्ञात्वा, सर्वं स्पष्टं निवेदयेत् ॥ ३६२ ॥
स्वपत्युर्मनसः शङ्कां, छिन्दन्ती खेदवर्जिता ।
कालोचितं प्रवर्तेत, पतिव्रतपरायणा ॥ ३६३ ॥
प्राघुर्णातिथिसन्मानं, व्ययं योग्यं करोति या ।
नोदासीना भवन्ती या, दुःखेषु मयि विश्वसेत ३६४
सुपात्रोचितदानानि, कुर्वन्ती दुष्टतां विना ।
रक्षेद्‌ब्रह्मातिमासेषु, भोगे नो मोहयेन्मनः ॥३६५॥
प्रजोत्पत्तिकृते योगो–धर्म्येण नियमेन च ।
न भ्रष्टा जैनधर्मात्स्या–दपि नष्टे धनादिके ॥३६६॥
पाखण्डिना न च भ्रान्ता, न भ्रष्टा मम भक्तितः ।
शिक्षयित्वा प्रकुर्याच्च, सन्तानाञ्जैनधर्मिणः॥३६७॥
मयि श्रद्धा मयि प्रेम, दुःखिजीवे दयालुता ।
निवृत्तौ मां च गायन्ती, मज्ज्ञानं सत्प्रवृत्तिषु ॥३६८॥

कुटुम्बं पालयेत्प्रीत्या, पूजयेत्सेवयेद्गुरून् ।
जैनशुद्धी प्रकुर्य्याच्च, विद्यातनुधनव्ययम् ॥ ३६९ ॥
प्रामाणिकं प्रवर्तेत, तस्याः स्याच्छुद्धि सन्मतिः ।
मदाज्ञया रतिं कुर्य्या—त्तस्याः स्यादुत्तमा गतिः ३७०
सुलभः पतिभावो न, यदि सत्यं विचारयेत् ।
योग्यः स्याद्गुणकर्मभ्यां, निर्दोषी च निरोगवान् ३७१
आत्मभोगश्च निष्कामो—धृतिर्मन्नाम चेतसि ।
नारीं परिणयेत्सैव, यो विद्याद्यमयोग्यताम् ॥ ३७२ ॥
प्रतिज्ञापालनं कुर्य्या—न्नान्धः स्यान्नामरूपयोः ।
अन्तः स्याच्छुभरागश्च, सेवाभक्तिर्विरागिता ॥३७३॥
स्वार्पणं जैनसेवायां, मदाज्ञां शिरसा वहेत् ।
विद्यात्सर्वकलाशिक्षां, बुद्धिं मानं च सात्त्विकम् ३७४
कालोचितक्रियावेत्ता, कर्मयोगी शुभप्रदः ।
धीरो वीरोऽथ गम्भीरो—बलवान्पौरुषैर्गुणैः, ॥३७५॥
जानीयाद्ब्रह्मवत्कायं—क्षयादिरोगवान्न यः ।
गुणी वाक्कायचित्तै र्यो—ऽसमयोग्यः स वै पतिः॥३७६॥
समाजसंघसेवाया—मानन्दी क्लेशवर्जितः ।
उद्योगी साहसी लक्ष्यी, यच्चित्ते सन्ति साधवः॥३७७॥
सहेत कोटिदुःखानि, मच्छ्रद्धामन्तरे वहेत् ।
उदारो ज्ञानवान्प्रेमी, सात्त्विकाहारभोजनः ॥३७८॥

धर्मयुद्धे चलेदग्रे, भीत्या मोहेन न स्खलेत् ।
सर्वयुक्त्या च शस्त्राद्यै–र्युद्धेऽन्नो पतितो भवेत् ॥३८९॥
नोच्चनीचो गुणैः कार्यैः, संयमे धारयेन्मनः ।
भ्रांतोऽपि न त्यजेद्धर्मं, योग्यं कर्म सदाऽऽचरेत् ॥३९०॥
सत्पात्रे वितरेद्दानं, गुरुवाणीं निशामयेत् ।
गुरुबोधाद्विदन्सर्वं, साधुवृन्दञ्च मानयेत् ॥ ३९१ ॥
स्वार्थेषु नो भवेदन्धो–दुर्गुणव्यसनं विना ।
गृहे क्लेशं न वा कुर्या–दतिलोभं न वा चरेत् ॥३९२॥
रागिद्वेषिजिदं विद्या–न्नापत्तौ खेदयेन्मनः ।
कुर्य्यात्सज्जनसंगं च, योग्याऽयोग्यं विचारयेत् ॥३९३॥
व्यापारविद्यादिककर्म कुर्व–
न्निजाऽधिकारेण च धर्म्यकर्म ।
सम्वेदयेच्चाऽखिलजातिनीतिं,
प्रेम्णा मदाज्ञामपि पालयेद्यः ॥ ३९४ ॥
प्रजादिराज्यादिककर्मकुर्व–
न्प्रेम्णा परस्याऽपि सहायकर्त्ता ।
देशस्य राज्यस्य च पालने यः,
कर्म प्रकुर्वन्गुणिरागवान्स्यात् ॥ ३९५ ॥
चरस्थावरतीर्थानां, देवः स्याच्छ्रद्धसेवया ।
शीलं तपोभावा–न्करोति शुद्धभावतः ॥३९६॥

धर्मस्तत्र यतः कर्म, निश्चयव्यवहारतः ।
प्रवृत्तौ धर्ममाज्ञाय, निवृत्तौ शर्म वेदयेत् ॥ ४०७ ॥
दम्पत्योर्जीवनं धर्मे, वहेत्सत्सुखदुःखयोः ।
तुष्टिरन्तर्बहीराग-रोषौ प्राप्तदशासु न ॥ ४०८ ॥
गार्हस्थ्यधर्ममैक्येन, कुर्वन्ती सद्विचारतः ।
गृहस्थजीवनं धर्म्यं, कुर्याच्चाऽधर्ममुत्सृजेत् ॥ ४०९ ॥
मां स्मरेत्सर्वकृत्येषु, सर्वत्र मां विलोकयेत् ।
सर्वान्ते मां च पश्येद्यो-जानीयाद्गुह्यमान्तरम् ४१०
दाम्पत्यजीवनं तेषां, ये मद्भक्ता नराः स्त्रियः ।
मद्भक्तिबलतो यान्ति, तेऽनन्तमाऽऽत्मजीवनम् ॥४११॥
वैराग्यं चेद्गृहावासे, तदा त्यागः शुभो भवेत् ।
रागस्याऽपेक्षया त्यागं,मद्भक्तिं विन्दते शुभाम्॥४१२॥
रागत्यागौ च चित्तस्य, तज्जागृहि सुदर्शने !।।
अस्त्यौपचारिकस्त्यागो-रागत्यागौ न चाऽऽत्मसु ४१३
शुभाशुभौ मनोभावौ, ततश्चाऽऽत्मा स्वयं पृथक् ।
शुभाशुभविचारेभ्यो-भिन्नाऽऽत्मधर्मकृद्भव ॥४१४॥
वर्त्ततां गुणकर्मभ्या-मनोन्यस्य ममान्तिके ।
निरासक्त्या भवेच्छुद्धो-बुद्धोऽर्हन्विष्णुरीश्वरः॥४१५॥
पुत्रीपुत्रान्कुरु श्रेष्ठा-न्गृहसूत्रं तु नीतिभिः ।
गुणिनो यदि सन्ताना-राज्यं संघश्च शोभते ॥४१६॥

वशीकृत्य मनस्तिष्ठे-स्सहेताऽपि रुजादिकम् ।
एकीभूय गृहे तिष्ठ, जवाऽन्यस्य गुणग्रही ॥ ४२७ ॥
नोदासीना भवाऽऽयत्तो, विश्वसीहि मयि स्थिरम् ।
हर्षं वह मयि प्रीत्या, मोहजालं निराकुरु ॥ ४२८ ॥
आत्मोन्नतिकृते सर्वं, ज्ञात्वा विश्वासमाचर ।
समः सर्वास्ववस्थासु, वर्तस्वाऽऽनन्दतः सुखी ॥४२९॥
दुःखदृश्यानि शिक्षार्थं, ज्ञात्वा स्या न मनोवशः ।
दोषं कुत्राऽपि नो देहि, सर्वं शिक्षय वस्तुतः ॥४३०॥
एकोऽन्यस्मिन्कुरु प्रीति-मेकोऽन्यक्षेममाचर ।
धर्मभेदाश्च दुष्टाःस्युः, पुष्टाःस्युर्गुणरागतः ॥ ४३१ ॥
धर्मनिमित्तभेदेन, स्वाऽऽत्माभेदेन वर्तनात् ।
आत्मविश्वं जडं विद्धि, धर्मः सत्यात्मनो ध्रुवम् ४३२
दृश्यते यत्र यत्रात्मा, सत्यं प्रेम न नश्यते ।
आत्मन्येव स्वःशुद्धो-यो विश्वे शिवमश्नुते ॥४३३॥
परब्रह्म मतो यत्र, गृहाऽऽश्रमे नव भ्रमः ।
महत्त्वा ईदृशा यत्र, तत्र कार्योऽपि निश्चयः ॥४३४॥
सर्वं धर्माऽऽत्मविश्वासो-यत्र तत्र सुखं ध्रुवम् ।
न सुखं सम्पदा लक्ष्म्या, न वा देशादिमोहतः ४३५
धमन्ते यो महान्मूर्खो, कृतो नाशोऽपि यद्धृदि ।
कुमतिः सत्ता संवेशो वा, सर्वं तन्नीतियां सुखम् ४३६

अधिकारो गृहस्थानां, देशादीनां च रक्षणे ।
लक्ष्मीं सत्तां च यो रक्षे–त्सुखी स्याद्व्यवहारतः॥४३७॥
दुष्टैर्यो दण्ड्यते नैव, भ्रान्त्या भ्रान्तो न वा भवेत् ।
धूर्तैश्च वञ्च्यते नैव, निर्मायी सरलैः सह ॥ ४३८ ॥
समाजदेशकृत्यानि, कुर्वन्सत्यं च संवदेत् ।
सर्वैः सार्द्धमभेदेन, वर्त्तते नच पापकृत् ॥ ४३९ ॥
एवं यत्र नरा नार्यो–वृद्धा युवकुमारकाः ।
वर्त्तते मङ्गलं तत्र, स्वातन्त्र्यं निर्भयं मनः ॥ ४४० ॥
आत्मभोगो भवेत्तत्र, न पक्षाऽपक्षता भवेत् ।
औदार्येण गृहावासी, कृपणो न बहुव्ययी ॥ ४४१ ॥
वृद्धाज्ञा मन्यते गेहे, प्राणानिष्टार्थमर्पयेत् ।
भेदः स्वार्थो यतो न स्या–त्तत्र सौख्यभृतं गृहम् ४४२
अभियोगशमो यत्र, मर्यादा लघुवृद्धयोः ।
न्यायलाभोऽस्ति सर्वेषां, क्लेशो नच कुटुम्बिनाम् ४४३
स्यात्क्षमापनमन्योऽन्यं, नोन्मादो नच दासता ।
सत्ताधनतनुत्यागै–र्धैर्यं शान्तिः सुखं भवेत् ॥४४४॥
नाल्पं नो चाऽधिकं यत्र, चित्तोऽन्यत्र प्रसीदति ।
संघे देशे गृहे सौख्यं, गुणैर्दुःखविनाशनम् ॥४४५॥
एकस्याऽन्यहिते प्राणा–स्त्वात्माऽऽनन्दो यतो महान् ।
यत्र योगः प्रकृत्याऽस्ति, भोगस्तत्र सुखं ततः ॥४४६॥

यत्र धर्मः प्रकृत्याऽस्ति, कर्म प्रकृतिभिस्सह ।
प्रकृत्या सह खेलोऽस्ति, निर्लेपेन सुखी भव ॥४४७॥

गृहादयः सन्ति सह प्रकृत्या,
संसार एषः प्रकृतिर्हि यावत् ।
आत्मा तथेयं प्रकृतिर्द्वयं च,
परस्परं तावदवलम्बने स्तः ॥ ४४८ ॥

प्रकृत्यालम्बनेनैव, सद्भावैर्मुक्तिमश्नुते ।
प्रकृतिः स्वानुकूला चे–द्व्यक्त आत्मगुणो भवेत् ॥४४९॥

प्रकृतौ रागरोषौ न, पोषः प्रकृतिपालनात् ।
कोऽपि दोषः प्रकृत्या नो, यत्राऽऽत्मा दोषवर्जितः॥४५०॥

न बन्धमोक्षौ प्रकृतौ कदाचि–
न्न बन्धमोक्षौ च निजाऽऽत्मनि स्तः ।
अन्तर्भवेत्स्वाऽनुभवोऽपरोक्षो–
भ्रान्तिर्व्रजेद्दोपततिर्विनश्येत् ॥ ४५१ ॥

अहमेकोऽस्मि यच्चित्ते, तत्र सर्वा हि बुद्धयः ।
दृढाः स्युर्गृहिजकाश्च, प्रीतिश्रद्धानतः शिवम् ४५२

बद्धो कषाये सति सर्वनाशो–
दुरीतिदुष्टव्यसने विलासः ।
अनीतयस्तत्र तु भीमनीति–
र्देशे समाजेऽपसरीतयश्च ॥ ४५३ ॥

परस्परं विनाशार्थ–मुद्यतन्ते प्रजा यतः ।
सर्वनाशाय वायुः स्या–द्रोगोत्पादस्तथा रणः ॥४५४॥
शिक्षाया मे यतो ह्रास्यं, प्रजानाशो भवेत्ततः ।
शिक्षातो मे विरुद्धश्चे–न्न सुखं देशसंघयोः ॥ ४५५ ॥
वर्त्तते मम शिक्षाभि–र्लर्क्ष्मी शान्ति स चाश्नुते ।
मदाज्ञावर्तने शक्ति–र्विश्वस्मिन्भक्तिरुद्भवेत् ॥ ४५६ ॥
धर्मभेदेन नो युद्ध्य, दुष्टक्लेशं विनाशय ।
सर्वे वै विश्वसन्तानाः, प्रिया आत्मसमा मम॥४५७॥
मा युद्ध्येद्भेदतः कश्चि–न्मां च सर्वत्र पश्यतु ।
ममाऽभेदाज्जगत्पश्य, चैत्यवीरं विलोकय ॥ ४५८ ॥
धर्मो मत्प्रीतिसेवासु, कुरु कर्म मयि स्थिरः ।
अनन्ताऽऽनन्दमाधेहि, शिक्षां स्मर सुदर्शने ! ॥४५९॥
मनोजावेन संसारो–मुक्तिः स्यादाऽऽत्मभावतः ।
आत्मज्ञावे स्थिरो भूत्वा, कुरु कर्माणि मन्मनाः ॥४६०॥
आधारनामरूपेभ्यः, पृथग्मां प्रविलोकय ।
निजज्योतिस्सु संगम्य, स्यादनन्तसुखास्पदः ॥४६१॥
सर्वाऽवस्थासु मन्नाम, निष्कामेन भजन्ति ये ।
मन्नतया विन्दते ज्ञानं, तद्दानं ददते पुनः ॥ ४६२ ॥
शुद्धभक्तिस्तथाज्ञानं, यातोऽन्ते त्वेकरूपताम् ।
सृज्यमाणश्च यः शेष–स्तं मां भक्ता हि विन्दते ॥४६३॥

यत्र धर्मः प्रकृत्याऽस्ति, कर्म प्रकृतिनिस्सह ।
प्रकृत्या सह खेलोऽस्ति, निर्लेपेन सुखी भव ॥४४७॥

गृहादयः सन्ति सह प्रकृत्या,
संसार एषः प्रकृतिर्हि यावत् ।
आत्मा तथेयं प्रकृतिर्द्वयं च,
परस्परं तावदवलम्बनं स्तः ॥ ४४८ ॥

प्रकृत्यालम्बनेनैव, सद्भावैर्मुक्तिमश्नुते ।
प्रकृतिः स्वानुकूला चे-द्व्यक्त आत्मगुणो भवेत् ॥४४९॥

प्रकृतौ रागरोषौ न, दोषः प्रकृतिपालनात् ।
कोऽपि दोषः प्रकृत्या नो, यत्राऽऽत्मा दोषवर्जितः॥४५०॥

न बन्धमोक्षौ प्रकृतौ कदापि-
न बन्धमोक्षौ च निजाऽऽत्मनि स्तः ।
अन्तर्बहि[illegible]मोक्षो-
[illegible] ॥ ४५१ ॥

यद्रूपेऽहोऽस्ति यत्किंचि, तत्र सर्वं हि पूरयः ।
[illegible] स्पृष्टि[illegible], [illegible] ज्ञानतः शिवम् ४५२

[illegible] सन्ति [illegible]-
[illegible] विशालः ।
[illegible]-
[illegible] ॥ ४५३ ॥

परस्परं विनाशार्थ-मुद्यतन्ते प्रजा यतः ।
सर्वनाशाय वायुः स्या-द्रोगोत्पादस्तथा रणः ॥४५४॥
शिक्षाया मे यतो ह्रास्यं, प्रजानाशो भवेत्ततः ।
शिक्षातो मे विरुद्धश्चे-न्न सुखं देशसंघयोः ॥ ४५५ ॥
वर्त्तते मम शिक्षाभि-र्लक्ष्मीं शान्तिं स चाश्नुते ।
मदाज्ञावर्तने शक्ति-र्विश्वस्मिन्भक्तिरुद्भवेत् ॥४५६॥
धर्मभेदेन नो युद्धय, दुष्टक्लेशं विनाशय ।
सर्वे वै विश्वसन्तानाः, प्रिया आत्मसमा मम॥४५७॥
मा युद्धयेद्भेदतः कश्चि-न्मां च सर्वत्र पश्यतु ।
ममाऽभेदाज्जगत्पश्य, चैक्यवीरं विलोकय ॥४५८॥
धर्मो मत्प्रीतिसेवासु, कुरु कर्म मयि स्थिरः ।
अनन्ताऽऽनन्दमाधेहि, शिक्षां स्मर सुदर्शने ।॥४५९॥
मनोभावेन संसारो-मुक्तिः स्यादाऽऽत्मभावतः ।
आत्मभावे स्थिरो भूत्वा, कुरु कर्माणि मन्मनाः॥४६०॥
आधारनामरूपेभ्यः, पृथग्मां प्रविलोकय ।
निजज्योतिस्सु संगम्य, स्यादनन्तसुखास्पदः॥४६१॥
सर्वाऽवस्थासु मन्नाम, निष्कामेन भजन्ति ये ।
मद्भक्तया विन्दते ज्ञानं, तज्ज्ञानं ददते पुनः ॥ ४६२ ॥
शुद्धभक्तिस्तथाज्ञानं, यातोऽन्ते त्वेकरूपताम् ।
मृग्यमाणश्च यः शेष-स्तं मां भक्ता हि विन्दते॥४६३॥

आत्माऽस्त्ययं देवगुरुस्वरूपो–
धर्मस्वरूपश्च स रूप्यरूपी।
पश्याऽऽत्मचित्तेषु निजाऽऽत्मखेलं,
शरीरसौधः परमोत्तमोऽस्ति ॥ ४७४ ॥
आजीविकादिक मवश्यकृतिं विधाय,
स्वस्त्रादिकोचितसुभोजनमप्यवाप्य।
जीवन्तु नाम वपुरादित एव जन्या–
धर्म्यक्रियां व्यवहृतेरखिलाश्चरन्तः ॥ ४७५ ॥
सर्वोत्तमां कृषिमवेहि सुदर्शने त्वं
स्वातन्त्र्यमस्ति जगतः कृषितस्तु नूनम्।
न स्यात्कृषिं विदधतां ननु कोऽप्यनर्थो–
भव्याङ्गिनां सकलनीतिषु तत्पराणाम् ॥४७६॥
यन्त्रादिककलाः सर्वा–व्यापारश्चाऽपि मध्यमः।
जीव्यते चाऽपि विद्यादे–र्जीवनं नोत्तमं विना ॥४७७॥
निर्दोषिणस्ते च नराः स्त्रियःस्यु–
र्ये नीतितः कर्म सदाचरन्ति।
गृहाश्रमे कर्म विधाय सर्वं,
त्यक्त्वा ममेमं भवमुत्तरन्ति ॥ ४७८ ॥
कर्माचरन्तो गुणकर्मरीत्या,
न जायते तद्धृदि कोऽपि बन्धः।

दुग्धाज्यवदहं व्यासः, काष्ठे वह्निर्यथा तनौ ।
विश्वस्मिन्सत्तया ज्ञात्वा, भजध्वं मां नराः स्त्रियः॥४६४॥
नामरूपादिभिन्नोऽहं, महावीरो जिनेश्वरः ।
स्वाऽऽत्मानं वेत्ति यश्चैवं, स शान्तिं सुखमश्नुते॥४६५॥
भ्रमन्भ्रान्त्या चतुर्दिक्षु, कुर्वन्नाशामनेकशः ।
न तिष्ठति जनव्रातः, पारंमच्छ्रद्धया व्रजेत् ॥ ४६६ ॥
श्रद्धया मम योऽतिष्ठ–देहत्रावात्स वै मृतः ।
अजीवदाऽऽत्मरूपेण, भूत्वा स मृतजीवनः ॥४६७॥
नित्याऽऽत्मानो यतो जैना–न म्रियन्तेऽपि मारिताः ।
देहप्राणा विनश्यन्ति, चाऽऽत्मा न म्रियते स्वतः॥४६८॥
यत्राऽऽत्मा म्रियते सत्यं, तत्कृत्यं विद्धि भावतः ।
निश्चयान्म्रियते नाऽऽत्मा, तज्ज्ञस्तु सत्यकर्मवान्॥४६९॥
अविनाशी त्रिकालेऽपि, सोऽनन्ताऽऽनन्दबोधवान् ।
हन्यते पञ्चभूतैर्न, वेत्ति यः सच निर्भयः ॥ ४७० ॥
आत्मानं कोऽपि नो हन्ति, चाऽऽत्मानं कोऽपि नाऽऽहरेत्।
नाऽऽत्मनो जन्ममृत्यू स्तः, कर्ता हर्ता स्वयं हि सः॥४७१॥
आत्मा जैनो जिनो ब्रह्मा, हरो विष्णुर्महाँश्च सः ।
सद्धर्मास्त्वाऽऽत्मपर्यायाः, सर्वे धर्मा इह स्थिराः॥४७२॥
रूप्यरूप्ययमाऽऽत्माऽस्ति, गुरुदेवस्वरूपकः ।
आत्मनो जैनधर्मे तु: सर्वे धर्माः प्रमान्ति हि ॥४७३॥

आत्माऽस्त्ययं देवगुरुस्वरूपो–
धर्मस्वरूपश्च स रूप्यरूपी।
पश्याऽऽत्मचित्तेषु निजाऽऽत्मवेलं,
शरीरसौधः परमोत्तमोऽस्ति ॥ ४७४ ॥
आजीविकादिक मवश्यकृतिं विधाय,
स्वश्रमादिकोचितसुभोजनमप्यवाप्य ।
जीवन्तु नाम वपुरादित एव जन्या–
धर्म्यक्रियां व्यवहृतेरखिलाश्चरन्तः ॥ ४७५ ॥
सर्वोत्तमां कृषिमवेहि सुदर्शने त्वं
स्वातन्त्र्यमस्ति जगतः कृषितस्तु नूनम् ।
न स्यात्कृषिं विदधतां ननु कोऽप्यनर्थो–
भव्याङ्गिनां सकलनीतिषु तत्पराणाम् ॥४७६॥
यन्त्रादिककलाः सर्वा–व्यापारश्चाऽपि मध्यमः ।
जीव्यते चाऽपि विद्यादे–र्जीवनं नोद्यमं विना ॥४७७॥
निर्दोषिणस्ते च नराः स्त्रियःस्यु–
र्ये नीतितः कर्म सदाचरन्ति ।
गृहाश्रमे कर्म विधाय सर्वं,
त्यक्त्वा ममेमं भवमुत्तरन्ति ॥ ४७८ ॥
कर्माचरन्तो गुणकर्मरीत्या,
न जायते तद्धृदि कोऽपि बन्धः ।

जीवन्ति ये ते प्रभवन्ति वीरा-
गर्वो यतो नास्ति मृषा न मोहः ॥ ४८४ ॥
गर्वादनीतिः समुदेति पूर्णा,
ह्यनीतितः पापमुदेति पूर्णम् ।
पापेन शक्तिर्विलयं प्रयाति,
वपन्ति यत्तद्धि पुरा लभन्ते ॥ ४८५ ॥
माद्यन्ति मर्त्या धनसत्तया ये,
स्वान्तेषु ते पातमथो लभन्ते ।
योऽन्यायतः कामयते स्वकीर्तिं,
स मानवोऽन्ते लभतेऽपकीर्तिम् ॥ ४८६ ॥
पराऽशुभं ये मनुजाः प्रकामं,
सम्यक् स्वशक्त्यर्थमिहाऽऽचरन्ति ।
अन्ते तु पश्चादनुशेरते ते,
मनोवपुर्भ्यामनयं विधाय ॥ ४८७ ॥
कृतेऽशुभे स्यादशुभं जनाना-
मिन्द्रोनशक्तः कृतकर्ममुक्तौ ।
यादृक् कृतं कर्म फलं च तादृक्,
शर्म्मोऽपि पुण्यक्रियायाऽभ्युदेति ॥ ४८८ ॥
नं स्थिरं नैव भवेदनीत्या,
शूरोऽप्यनीतेः क्षयमेति काले ।

जीवन्ति ये ते प्रभवन्ति वीरा-
  गर्वो यतो नास्ति मृषा न मोहः ॥ ४८४ ॥
गर्वादनीतिः समुदेति पूर्णा,
  ह्यनीतितः पापमुदेति पूर्णम् ।
पापेन शक्तिर्विलयं प्रयाति,
  वपन्ति यताद्धि पुरा लभन्ते ॥ ४८५ ॥
मायन्ति मर्त्या धनसत्तया ये,
  स्वान्तेपु ते पातमथो लभन्ते ।
योऽन्यायतः कामयते स्वकीर्तिं,
  स मानवोऽन्ते लभतेऽपकीर्तिम् ॥ ४८६ ॥
पराऽशुभं ये मनुजाः प्रकामं,
  सम्यक् स्वशक्त्यर्थमिहाऽऽचरन्ति ।
अन्ते तु पश्चादनुशेरते ते,
  मनोवपुर्भ्यामनयं विधाय ॥ ४८७ ॥
कृतेऽशुभे स्यादशुभं जनाना-
  मिन्द्रोनशक्तः कृतकर्ममुक्तौ ।
यादृक् कृतं कर्म फलं च तादृक्,
  शर्म्मोऽपि पुण्यक्रियया‌ऽभ्युदेति ॥ ४८८ ॥
धनं स्थिरं नैव भवेदनीत्या,
  शूरोऽप्यनीतेः क्षयमेति काले ।

नक्ता न चोचा न हि केऽपि नीचाः,
श्रेष्ठास्तु ते ये न जडेषु रक्ताः ॥ ४७९ ॥
गार्हस्थ्यमेवं प्रतिपालयन्तो-
नराः स्त्रियः स्वश्च शिवं लभन्ते ।
गृहस्थलिङ्गेन समाश्रितानां,
मुक्तिर्भवेदाऽऽत्मसुखानि लब्ध्वा ॥ ४८० ॥
स्यात्त्यागिनां सद्गृहिणां च मुक्ति-
र्ज्ञानं च भक्तिर्भवमुक्तिहेतुः ।
शूरेषु भक्तिः समुदेति पूर्णा,
श्रद्धा च शक्तिश्च तथाऽनुरागः ॥ ४८१ ॥
विद्यास्वसत्ताधनसत्त्वयोगै-
र्जगत्सु जीवन्ति जनाश्च सत्यम् ।
भ्रष्टाश्च तस्माद्विपयान्नरा ये,
हीना हि ते वंशपरम्पराभिः ॥ ४८२ ॥
न्यायो यतस्तत्र सहायकोऽहं,
न्यायो यतस्तत्र च बुद्धिसत्ते ।
यत्राऽऽत्मभोगोऽस्ति ततोऽस्ति शक्ति-
र्निश्शक्तिकास्तेऽतितरां रुदन्ति ॥ ४८३ ॥
निश्शक्तिका ये विषयेषु रक्ता-
स्ते मृत्युतो बिभ्यति पारतन्त्र्यात् ।

जक्ता न चोच्चा न हि केऽपि नीचाः,
श्रेष्ठास्तु ते ये न जडेषु रक्ताः
गार्हस्थ्यमेवं प्रतिपालयन्तो–
नराः स्त्रियः स्वश्च शिवं लभन्ते ।
गृहस्थलिङ्गेन समाश्रितानां,
मुक्तिर्भवेदाऽऽत्मसुखानि लब्ध्वा
स्यात्त्यागिनां सद्गृहिणां च मुक्ति–
र्ज्ञानं च भक्तिर्जवमुक्तिहेतुः ।
शूरेषु भक्तिः समुदेति पूर्णा,
श्रद्धा च जक्तिश्च तथाऽनुरागः
विद्यास्वसत्ताधनसत्त्वयोगे–
र्जगत्सु जीवन्ति जनाश्च सत्यम् ।
भ्रष्टाश्च तस्माद्विपयान्नरा ये,
हीना हि ते वंशपरम्पराभिः
न्यायो यतस्तत्र सहायकोऽहं,
न्यायो यतस्तत्र च बुद्धिसत्ते ।
यत्राऽऽत्मभोगोऽस्ति ततोऽस्ति शक्ति–
र्निश्शक्तिकास्तेऽतितरां रुदन्ति
निदशक्तिका ये विषयेषु रक्ता–
स्ते मृत्युतो बिभ्यति पारतन्त्र्यात् ।

जीवन्ति ये ते प्रभवन्ति वीरा-
गर्वो यतो नास्ति मृषा न मोहः ॥ ४८४ ॥
गर्वादनीतिः समुदेति पूर्णा,
चानीतितः पापमुदेति पूर्णम् ।
पापेन शक्तिर्विलयं प्रयाति,
वपन्ति यताद्धि पुरा लभन्ते ॥ ४८५ ॥
माद्यन्ति मर्त्या धनसत्तया ये,
स्वान्तेषु ते पातमथो लभन्ते ।
योऽन्यायतः कामयते स्वकीर्तिं,
स मानवोऽन्ते लभतेऽपकीर्तिम् ॥ ४८६ ॥
पराऽशुभं ये मनुजाः प्रकामं,
सम्यक् स्वशक्त्यर्थमिहाऽऽचरन्ति ।
अन्ते तु पश्चादनुशेरते ते,
मनोवपुर्भ्यामनयं विधाय ॥ ४८७ ॥
कृतेऽशुभे स्यादशुभं जनाना-
मिन्द्रोनशक्तः कृतकर्ममुक्तो ।
यादृक् कृतं कर्म फलं च तादृक्,
शर्माऽपि पुण्यक्रिययाऽभ्युदेति ॥ ४८८ ॥
धनं स्थिरं नैव भवेदनीत्या,
शूरोऽप्यनीतेः क्षयमेति काले ।

कालें ततस्तद्विशदीकरोति,
तीर्थङ्करः स स्वयमेव भूत्वा ॥ ४९४ ॥
रागरोषविनाशार्थ–मर्हतां जन्म जायते ।
विद्धि तीर्थकरं ब्रह्म, चार्हन्तं गुणसागरम् ॥ ४९५ ॥
मिथ्यात्वादिविनाशार्थ–मर्हतां जन्म जायते ।
दुर्गुणव्यसनं हन्तुं, धर्मतीर्थं प्रकाशते ॥ ४९६ ॥
दुश्शास्त्रनाशाय तथाऽऽर्यशास्त्र–
प्रकाशनार्थं जगदीशदेवः ।
मिथ्यात्वभावादिकदोषहन्ता,
विज्ञानशास्त्रादिकसर्ववेत्ता ॥ ४९७ ॥
तीर्थङ्करोऽर्हन्भगवान्स बुद्धः,
शुद्धः स्वयं शुद्धविनिश्चयेन ।
कलौ मदाज्ञां प्रकुरु प्रमाणं,
मामन्तिमं तीर्थपतिं च विद्धि ॥ ४९८ ॥
सुदर्शने !! वेदय मां त्वमेवं,
सममाविर्भावोद्धृतिमाविधातुम् ।
ममावतारोऽस्ति विनिश्चयेन,
त्वं विद्धि सत्त्वप्रकृतिं दधानः ॥ ४९९ ॥
विश्वासकर्त्री भव मत्स्वरूपे,
विसृज्य मत्तोऽन्यविकल्पजालम् ।

काले ततस्तद्विशदीकरोति,
तीर्थङ्करः स स्वयमेव भूत्वा ॥ ४९४ ॥
रागरोषविनाशार्थ-मर्हतां जन्म जायते ।
विद्धि तीर्थकरं ब्रह्म, चार्हन्तं गुणसागरम् ॥ ४९५ ॥
मिथ्यात्वादिविनाशार्थ-मर्हतां जन्म जायते ।
दुर्गुणव्यसनं हन्तुं, धर्मतीर्थं प्रकाशते ॥ ४९६ ॥
दुश्शास्त्रनाशाय तथाऽऽर्यशास्त्र-
प्रकाशनार्थं जगदीशदेवः ।
मिथ्यात्वभावादिकदोषहन्ता,
विज्ञानशास्त्रादिकसर्ववेत्ता ॥ ४९७ ॥
तीर्थङ्करोऽर्हन्भगवान्स बुद्धः,
शुद्धः स्वयं शुद्धविनिश्चयेन ।
कलौ मदाज्ञां प्रकुरु प्रमाणं,
मामन्तिमं तीर्थपतिं च विद्धि ॥ ४९८ ॥
सुदर्शने !! वेदय मां त्वमेवं,
समग्रात्मशोद्धृतिमाविधातुम् ।
ममावतारोऽस्ति विनिश्चयेन,
त्वं विद्धि सत्त्वप्रकृतिं दधानः ॥ ४९९ ॥
श्वासकर्त्री भव मत्स्वरूपे,
विसृज्य मत्तोऽन्यविकल्पजालम् ।

ते मानवाः श्रावकतां लभन्ते,
शृण्वन्ति ये नाम ममोपदेशात् ॥ ५०५
स्युर्ब्राह्मणक्षत्रियवैश्यशूद्रा–
मत्प्रीतितः सद्गुणसागरास्ते ।
सर्वत्र खण्डेषु भवेद्विलासो–
दुःखं व्रजेत्स्याच्च परा सुखाऽऽशा ॥ ५०६ ॥
मत्सेवकाश्चिन्तितमालभन्ते,
मृत्वा सुखं जीवनमावहन्ति ।
मुह्यन्ति नो ते विभवेषु किञ्चित्,
परोपकारेण भवन्ति हृष्टाः ॥ ५०७ ॥
शुभोपयोगेन जडस्थलक्ष्म्या,
ते साधयन्ति स्वयमाऽऽत्मयोगम् ।
गर्वो न येषां क्षणिके जडेऽस्मि–
भ्रष्टे धने शोकलवो न येषाम् ॥ ५०८ ॥
संयोगभावोऽपमचेतनाना,
संयोगतश्चापि भवेद्वियोगः ।
वियोगसंयोगदशासु येषां–
हर्षो न शोको भवति प्रकामम् ॥ ५०९ ॥
एवंगृहित्वं भजतां नराणां,
मोहादयस्तेऽपसृता भवन्ति ।

ते मानवाः श्रावकतां लभन्ते,
शृण्वन्ति ये नाम ममोपदेशम् ॥ ५०५ ॥
स्युर्ब्राह्मणक्षत्रियवैश्यशूद्रा–
मत्प्रीतितः सद्गुणसागरास्ते ।
सर्वत्र खण्डेषु भवेद्विलासो–
दुखं व्रजेत्स्याच्च परा सुखाऽऽशा ॥ ५०६ ॥
मत्सेवकाश्चिन्तितमालभन्ते,
भूत्वा सुखं जीवनमावहन्ति ।
मुह्यन्ति नो ते विभवेषु किञ्चित्,
परोपकारेण व्रजन्ति हृष्टाः ॥ ५०७ ॥
शुभोपयोगेन जडस्थलक्ष्म्या,
ते साधयन्ति स्वयमाऽऽत्मयोगम् ।
गर्वो न येषां क्षणिके जडेऽस्मि–
न्नष्टे धने शोकलवो न येषाम् ॥ ५०८ ॥
संयोगभावोऽयमचेतनानां,
संयोगतश्चापि भवेद्वियोगः ।
वियोगसंयोगदशासु येषां–
हर्षो न शोको व्रजति प्रकामम् ॥ ५०९ ॥
एवंगृहित्वं व्रजतां नराणां,
मोहादयस्तेऽपसृता भवन्ति ।

नराः स्त्रियः श्रेष्ठतमाः स्वगेहे,
जीवन्ति विक्षिप्तवयतोऽपि चारु
स्पर्धन्त्यपार्थिव न कुर्वते ते,
सर्वार्पकास्ते परमार्थकार्ये ।
उद्योतमाना गुणसारसत्त्वे–
र्नराः स्त्रियो जीवनमावहन्ति
विश्वोपकर्ता भागमपि प्रदेहि,
सन्त्यज्य विद्याबलबुद्धिदेहान् ।
एकं न कुर्यादशुभं विचारं,
विश्वासिनः सन्तु नराः स्त्रियश्च
दत्वा स्वभोगं सहते त्रुटिं स्वां,
द्वयं समं साधयते स्वधर्मम् ।
गृहाश्रमे प्रार्थयते विरक्तिं,
त्यागं विधातुं स नरोऽधिकारी
ईदृग्गुणाः सन्ति नराः स्त्रियो या–
भक्तिं मदीयां सहसा लभन्ते ।
तीर्थङ्कराः श्रीऋषभादयो म–
त्पूर्वं बभूवुः प्रलयोऽपि यातः
एवं च निर्धारय सर्वखण्डे,
तत्तत्परिवर्त्तनानि ।

पूर्वं स्वकीयान्मरणान्मृतो यः,
स वर्तते त्यागिदशाधिकारी ॥ ५२५ ॥
जानाति नो योऽखिलवासनानां,
त्यागं स आत्मा भवतीह दासः।
कुर्वीत सर्वं तु स सर्वजिन्नो,
वेषक्रियादौ नच योऽस्ति मोही ॥ ५२६ ॥
न देशकालप्रतिबन्ध इष्टः,
स स्यात्स्वतन्त्रो न भवेत्स अन्धः।
तन्त्राणि विश्वस्य विसस्मरुर्ये,
वेषक्रियादौ नच मोहमत्ताः ॥ ५२७ ॥
न वा भवेत्स्वप्रकृतेर्वशे स–
चित्तेन नो यो भुवि पच्यतेऽत्र।
स्वामी भवेत्स्वप्रकृतेः स आत्मा,
भूत्वा स चार्हन्स्वरिपूंश्चिहन्यात् ॥ ५२८ ॥
ईशः स सत्त्वप्रकृतिः स देव–
स्तं त्यागिनं सर्वजना भजन्ते।
सुखालयस्त्यागदशाऽस्ति लोका–
न नामरूपेषु विमोहनीयम् ॥ ५२९ ॥
विश्वोद्धृतिं कर्तुमहं सयत्न–
स्त्यागी च भूत्वाऽस्मि सुदर्शनेहे।

त्यागः स्वतन्त्रत्वमथो सुखं स्या-
न्नयाति चित्तस्य च कोटिचिन्ता ॥ ५३५ ॥
स्वतन्त्रता चापि पदे पदे स्या-
त्प्रवर्त्तते स्वाऽऽत्मनि सर्वराज्यम् ।
स्यात्यागतश्चाशुभरागनाश-
स्त्यागश्च मिथ्याप्रतिबन्धनानाम् ॥ ५३६ ॥
वासो नच स्यादपकीर्तिकीर्त्यो-
र्न व्यक्तिमोहस्य च कोऽपि गन्धः ।
स्यान्नामरूपेषु विमोहनाशः,
कर्तव्यकार्येषु च पूर्णमोदः । ॥ ५३७ ॥
अयोग्यसर्वेप्सितवर्जनेन,
सौभाग्यमात्यन्तिकमाऽऽत्मनि स्यात् ।
यतश्च वैरोपशमा भवन्ति,
सत्योक्तितो भीतिरुपैति दूरम् ॥ ५३८ ॥
शिवानु सत्यं समुदेति पूर्णं,
निष्कामभावेन कृते विधाने ।
आत्माऽस्ति धीरोऽमरदोलतोऽपि,
क्षीराब्धितोऽप्यस्ति महागभीरः ॥ ५३९ ॥
स्वात्मैध निन्दावचनानि यानि,
नयाऽनयं यत्प्रकरोति लोकः ।

त्यागः स्वतन्त्रत्वमथो सुखं स्या-
द्याति चित्तस्य च कोटिचिन्ता ॥ ५३५ ॥
स्वतन्त्रता चापि पदे पदे स्या-
त्प्रवर्त्तते स्वाऽऽत्मनि सर्वराज्यम् ।
स्यात्यागतश्चाशुजरागनाश-
स्त्यागश्च मिथ्याप्रतिबन्धनानाम् ॥ ५३६ ॥
वासो नच स्यादपकीर्तिकीर्त्यो-
र्न व्यक्तिमोहस्य च कोऽपि गन्धः ।
स्यान्नामरूपेषु विमोहनाशः,
कर्त्तव्यकार्येषु च पूर्णमोदः । ॥ ५३७ ॥
अयोग्यसर्वेप्सितवर्जनेन,
सौभाग्यमात्यन्तिकमाऽऽत्मनि स्यात् ।
यतश्च वैरोपशमा भवन्ति,
सत्योक्तितो भीतिरपैति दूरम् ॥ ५३८ ॥
क्रियासु सत्यं समुदेति पूर्णं,
निष्कामभावेन कृते विधाने ।
आत्माऽस्ति धीरोऽमरशीलतोऽपि,
क्षीराब्धितोऽप्यस्ति महागभीरः ॥ ५३९ ॥
यस्मिंश्च निन्दावचनानि यानि,
नयाऽनयं परमकरोति लोकः ।

त्यागं गृहावासमनु प्रधार्य,
वैराग्यतो विश्वमहं जरामि
वैराग्यतो नश्यति चित्तदोषो-
विश्वेषु शान्तिः समुदेति पूर्णा।
एतज्जगत्स्वस्ति न कोऽपि सार-
श्चिचेत यः संसृतिपारमाप
अनेकजोगादपि नास्ति शान्तिः,
सत्यं तु विश्रान्तिरहो विरक्तेः।
चित्तस्य विश्रान्तिरहो विरक्तेः,
कामस्पृहा याति मनोभ्रमश्च
विचार्य चित्तेषु ममोपदेशं,
शान्तिं परामाऽऽत्मनि शोधय त्वम्
वैराग्यतः स्यादतिनिर्भयत्वं,
तथाऽऽत्मविश्वास उदेति चित्ते
वैराग्यतः स्वाच्छमता च मुक्ति-
र्वैराग्यतस्त्यागिकयुक्तिरस्ति।
जोगेषु रोगस्य भयं त्ववश्यं,
विवादतश्चाप्यपकीर्तिनीतिः
लक्ष्म्या भवेच्चंचलताप्यवश्यं,
वैराग्यतः स्याद्भवजालमुक्तिः।

तथापि नो तेषु भवेद्विमोही,
त्यजेन्न सत्यं सुनयं विदित्वा
मिथ्याक्रियाणां च यतो विसर्गो,
मिथ्यापदार्थेषु यतो विरक्तिः ।
क्षणे क्षणे मां हृदये स्मरन्ति,
ते ज्ञानिनो मुक्तिपथं लभन्ते
स्वतन्त्रतां ज्ञानिजना लभन्ते,
नानाविधाचारविचारमध्ये ।
निषेधतो वा विधितो न बन्धः,
सर्वेषु कार्येषु च ते स्वतन्त्राः
तृणे मणौ वा समभाविनो ये,
त्यागे वहि र्नास्ति हठश्च येषाम् ।
त्यागाच्च रागादपि यान्ति तेऽग्रं,
सन्निर्मलानन्द उदेति यत्र
त्यागस्य भेदास्तु भवन्त्यसंख्या–
नश्यन्ति खेदा हृदि तत्प्रबोधात् ।
मुह्यन्ति नो त्यागिजना य एवं,
विभान्ति तत्राखिलशक्तयश्च
क्षमा मृदुत्वं सरलत्वमुक्ती,
शौचं तपःसंयमरीतयश्च ।

कर्माणि मोहेन विना न सन्ति,
त्यागः पुनर्ब्रह्मतया विभाति ॥ ५४५ ॥
रूपे मदीये न कुरुष्व वादं,
वादे कृते हानिरुदेति पूर्णा ।
मच्छ्रद्धया त्वं वस मेऽनुरागा-
त्तस्माच्च मद्रूपमहो लभस्व ॥ ५४६ ॥
एवंप्रभु र्वाप्रभुरस्ति चेवं,
व्याप्योऽस्ति वा व्यापक एव ईशः ।
एवंविधानस्म्रति मुञ्च तर्का-
न्विश्वासतो मां सकला भजन्तु ॥ ५४७ ॥
यथा यथा वाऽऽवरणप्रणाश-
स्तथा तथा मेऽनुभवा मिलन्ति ।
नयेन्निजाऽऽत्माऽनुजयस्य दृष्टि-
र्ध्येव प्रसिद्धोऽस्ति नयो स्वरूपे ॥ ५४८ ॥
त्यागेन सर्वस्य च सिद्धआत्मा,
ज्ञानेषु सर्वे विषयाः प्रभान्ति ।
ज्ञेयोऽस्ति सर्वो हि निजाऽऽत्मधर्मो-
ज्ञाता निजाऽऽत्मा जडचेतनानाम् ॥ ५४९ ॥
आत्मन्याऽऽत्मैव संभाति मुक्ताऽऽत्मा भवति प्रभुः ।
जीवन्मुक्तदशा यात्र-त्याग्रकार्यो गुना क्रिया ॥५५०॥

मयि श्रद्धानुरागाभ्यां, भक्ता भवन्ति मत्समाः ।
मद्रूपीभूय मद्ध्याता, मत्समो जायते ध्रुवम् ॥५५१॥
वीतरागदशां यान्ति, मद्भक्ता आत्मबोधकाः ।
सम्यग्दृष्टिं हृदि प्राप्ताः, सिद्धा बुद्धा भवन्ति ते॥५५२॥
मच्छ्रद्धाभ्रष्टलोकानां, नास्तिकानां न सद्गतिः ।
दुःखं च दुर्मतिस्तेषा-मशान्तिः पतनं भयम् ॥५५३॥
दुर्बलत्वं च दासत्वं, युद्धं क्लेशपरम्परा ।
पशुबलमविश्वासो-दुर्नीतिर्भ्रष्टजीवनम् ॥ ५५४ ॥
अप्रामाण्यमनार्यत्व-मस्थैर्यं शक्तिहीनता ।
दुर्गुणव्यसनैर्भ्रष्टं, जीवनं जडवादता ॥ ५५५ ॥
मच्छ्रद्धायुक्तलोकानां, भक्तानां, सद्गतिर्ध्रुवम् ।
सुखं च सन्मतिस्तेषां, शान्तिश्च प्रगतेर्बलम् ॥५५६॥
प्रकृतियोगमालम्ब्य, स्वाऽऽत्मपूर्णोन्नतेः पदम् ।
यान्ति च कर्मराशीनां, क्षयं कुर्वन्ति तत्परम् ५५७
स्वातंत्र्यमान्तरं बाह्यं, यान्ति युद्धे निरोधनम् ।
सर्वसत्त्वेषु निःसङ्गाः, सद्गुणाऽऽत्मजीविनः ॥ ५५८ ॥
प्रामाणिकाः सदाचार,-विचारे धर्मजीविनः ।
सर्वं जीविनः शूरा-भवन्ति मादृशा जनाः ॥५५९॥
आत्मश्रद्धां च विश्वासं, धैर्यं शान्तिं च धारयन्तः ।
आत्मज्ञानं च सम्प्राप्य, मुक्तिं यान्ति मनीषिणः ५६०

जडवादे न मुह्यन्ति, यान्ति चाऽऽत्मोन्नतेः क्रमान् ।
सदोर्ध्वगमनं तेषां, विनिपातो न चान्तरः ॥ ५६१ ॥
बाह्यतो दुःखभोगेऽपि, चाऽऽन्तरमाऽऽत्मजीवनम् ।
बाह्यतो दुर्दशायुक्ता-स्तथापि चान्तराश्च ने ॥ ५६२ ॥
आत्मानन्दोदधौ मग्ना-ईश्वराः प्रभवो जिनाः ।
मज्ज्ञातारश्च सज्जैना-भवन्ति ध्यानयोगतः ॥ ५६३ ॥
मच्छ्रद्धायुक्तलोकाना-माऽऽत्मबलं प्रकाशते ।
रागद्वेषजयाभ्यासो, निष्फलो नैव जायते ॥ ५६४ ॥
रागद्वेषजयाभ्यासा-न्मोहशक्तिर्विनश्यति ।
प्रान्ते मोहारिनाशेन, जीवः सिद्धः प्रजायते ॥५६५॥
मच्छ्रद्धाभ्रष्टलोकानां, विनिपातः सहस्रधा ।
बाह्यत इन्द्रतुल्यास्ते, चान्तरे कीटसदृशाः ॥५६६॥
आत्मज्ञानसुखार्थं स्यु,-र्मज्जैनानां विपत्तयः ।
प्रतिकूलश्च यत्तेषां, प्रत्युत मुक्तिहेतवे ॥ ५६७ ॥
पुण्योदयेन सातं स्या-दसातं पापकर्मतः ।
साताऽसातविभिन्नोऽस्ति, स्याऽऽत्मानन्दो निजाऽऽत्मनि
॥ ५६८ ॥

आत्मन्येव सुखं सत्य-मस्ति ज्ञानादिलोकय ।
मा भ्रम बाह्यभोगेषु, सुखार्थं वच्मि सद्वचः ॥५६९॥
रागस्य हेतवो ये ये, ते ते वैराग्यहेतवः ।
भवन्ति मम जैनानां, भोगाः स्युर्योगहेतवे ॥५७०॥

पूर्वजन्मनिबद्धस्य, निकाचितस्य कर्मणः ।
शुभाऽशुभोदये मज्ज्ञा–हर्षं शोकं न विन्दते ॥५७१॥
सर्वकर्मप्रकुर्वाणा–श्चापि भिन्ना हि सर्वतः ।
सर्वस्मिन्नपि निर्लिप्तास्ते, सर्वतः कर्मयोगिनः ॥५७२॥

नीचेष्वपि हि नीचा ये, भवन्त्युच्चा मदाश्रयात् ।
अनादिकर्मयुक्तास्ते, कर्ममुक्ता भवन्ति हि ॥५७३॥
मदुक्ततत्त्वबोधेन, स्याऽऽत्मशुद्धिर्नयद्वयात् ।
स्वानन्त्यमाऽऽत्मराज्यस्य, स्वान्ते नूनं प्रकाशते ॥५७४॥

भवन्ति मत्समा जैना,–ज्ञानचारित्रयोगतः ।
मोहादिकर्मणां शीघ्रं, क्षयं कुर्वन्ति मत्पराः ॥५७५॥
मद्भक्तानां बलं बुद्धिः, शान्तिस्तुष्टिः सुखं यशः ।
वृद्धिर्निजाऽऽत्मनः शक्ति–रात्मस्थैर्यं प्रकाशते ॥५७६॥

मम धर्मे वरं मृत्यु–रन्यधर्मो न शर्मदः ।
इति निश्चित्य मद्भक्तिं, कुर्वन्ति यान्ति ते शिवम् ॥५७७॥
विविधधर्मसंस्थाः, प्रान्ते प्राप्य मदाश्रयम् ।
समत्वेन हि संयान्ति, मुक्तिं तत्र न संशयः ॥५७८॥

[illegible] हि, [illegible] परमं महत् ।
[illegible]–मुक्तिं यान्ति हि ते भुवि ॥५७९॥
[illegible] निर्ग्रन्था–जनाः [illegible] ।
[illegible] ॥५८०॥

आत्मशुद्धोपयोगेन, यत्र तत्र यदा तदा ।
सर्वविश्वस्थलोकानां, मुक्तिर्भवति निश्चयः ॥ ५८१ ॥
विश्वोद्धाराय धर्मस्य, प्रचारो जगति ध्रुवम् ।
मया प्रक्रियते नूनं, विश्वदुःखविनाशकृत् ॥ ५८२ ॥
अधर्मदुःखनाशार्थं, धर्मसंस्थापनाय मे ।
जन्माऽभूत्तीर्थकृन्नाम्ना, विश्वस्य शान्तिहेतवे ॥५८३॥
यदा हि धर्मतीर्थस्य, नाशो भवति तत्तदा ।
परेश्वरस्य तीर्थस्य,—कारिणो जन्म जायते ॥५८४॥
पापादुःखं सुखं पुण्यात्, स्वर्गश्च नृभवादिकम् ।
दर्शनज्ञानचारित्रं, मोक्षमार्गो मयोच्यते ॥ ५८५ ॥
मां भजन्ति च ये मुक्त्यै, मुक्तिं यान्ति च ते ध्रुवम् ।
स्वर्गार्थं मां भजन्तो ये, स्वर्गं यान्ति सुनिश्चयः ५८६
मज्जनाः स्वदशायुक्ता—निष्कामिनश्च कामिनः ।
आत्मशुद्धिं प्रकुर्वाणा—भवन्ति मुक्तिसम्मुखाः ॥५८७॥
विद्यार्थी लभते विद्यां, स्त्रीकामो लभते स्त्रियम् ।
वित्तार्थी लभते वित्तं, यशोऽर्थी लभते यशः ॥५८८॥
राज्यार्थी लभते राज्यं, पुण्यार्थी पुण्यभाग् भवेत् ।
धर्मार्थकाममोक्षाणां, प्राप्तिर्मे भक्तितो भवेत् ॥५८९॥
प्रपद्यन्ते यथा ये मां, यादृग्भावेन देहिनः ।
तादृग्भावेन जायन्ते, यथाभावस्तथाफलम् ॥५९०॥

यादृशो यस्य भावोऽस्ति, तस्य तादृक् फलं भवेत्।
एवं ज्ञात्वा विवेकेन, सद्भावं हृदि धारय ॥ ५९१ ॥
विचाराचारतुल्यं हि, फलं भवति देहिनाम्।
त्यक्त्वाऽशुभं शुभं कुर्या–मा प्रमादं कुरु क्षणम्॥५९२॥
यादृशो भवितुं कांक्षे–ज्जनो भवति तादृशः।
यत्नोत्साहबलस्थैर्या–न्मज्जन ईश्वरो भवेत् ॥५९३॥
स्वाऽऽत्मैव सिद्धबुद्धोऽस्ति, मोहावरणसंक्षयात्।
स्वस्य पराऽऽत्मतां ज्ञात्वा,पराऽऽत्मा भव सत्वरम्॥५९४॥
अन्तराऽऽत्मा विजानाति, स्वाऽऽत्मानं परमेश्वरम्।
शुद्धाऽऽत्मा परमेशोऽस्ति, स्वं दीनं नैव भावय॥५९५॥
यद्यपि कर्मसंयोगी, तथाऽपि ज्ञानशक्तितः।
अन्तर्मुहूर्तकालेन, मुक्तो भवति सर्वथा ॥ ५९६ ॥
ज्ञानध्यानक्रियाभक्ति–सेवाद्यसंख्यसाधनैः।
आत्मा याति परब्रह्म–परमाऽऽत्मपदं ध्रुवम् ॥५९७॥
माभैषीः कर्मतः किंचि–दाऽऽत्मना कर्म नश्यति।
कर्मतोऽनन्तशक्तिर्हि, वर्त्तते जाग्रदाऽऽत्मनः ॥५९८॥
ज्ञानाऽऽत्मा कर्मभोक्ताऽपि, कर्मनाशं करोति वै।
कर्मणां निर्जरार्थं हि, ज्ञानिनां भोगरागयः ॥५९९॥
चतुर्दशगुणस्थान–मारोह चोत्तरोत्तरम्।
मोक्षप्रासादसोपान–माऽऽत्मशुद्धिगुणाऽऽस्पदम्॥६००॥

अन्तर्दृष्टिं समाश्रय, सत्स्वरूपविचारिणः ।
व्यञ्जयन्त्याऽऽत्मधर्मं ते, ज्ञानानन्दमयं स्वकम्॥६११॥
जायन्ते पुण्यकर्माणि, सर्वविश्वस्य शान्तये ।
पापकर्माणि हेयानि, सर्वविश्वहितं कुरु ॥ ६१२ ॥
अन्नवस्त्रादिकं देयं, तद्योग्येभ्यो विशेषतः ।
यत्र तत्र गुणा ग्राह्या यस्य कस्यापि देहिनः ॥६१३॥
सद्गुणैः स्वोन्नतिः पूर्णा, दुर्गुणैः पतनं भवेत् ।
दुर्व्यसनैः स्वजीवस्य, विनिपातो भवेत्खलु ॥६१४॥
विश्वसेवास्ति सत्कार्यं, राऽऽत्मधर्मस्य सेवनात् ।
दुर्गुणानां विनाशेन–विश्वशान्तिस्तथोन्नतिः ॥६१५॥
साहाय्यं दुःखिजीवानां, कर्तव्यं स्वीयशक्तितः ।
विद्याधनादिभि र्गर्वः, कर्तव्यो न कदाचन ॥६१६॥
मैत्रीभावेन विश्वस्य, लोकैः सह प्रवर्तनम् ।
कर्तव्यं न्यायसम्पन्न–वित्तेन, भोजनादिकम् ॥६१७॥
स्वागतं साधुवर्गस्य, कर्तव्यं वृद्धसेवनम् ।
अतिथेःसेवनं कार्यं, सेव्या निजोपकारिणः ॥ ६१८ ॥
यथा यथा कषायाणा–मुपशान्तिस्तथा तथा ।
वर्त्तितव्यं विशेषेण, निजाऽऽत्मशुद्धिहेतवे ॥ ६१९ ॥
अनीतिः परिहर्तव्या, वर्तितव्यं च नीतितः ।
स्वदोषाणां विनाशाय, यतितव्यं स्ववीर्यतः ॥६२०॥

कर्तव्या स्वाऽऽत्मनः शुद्धिः, सर्वोपायैर्विवेकिभिः ।
आत्मशुद्धिं विना विश्व–सेवाकर्म तु दुर्लभम् ६२१
निर्विकल्पदशाप्राप्त्या, निर्विकल्पं सुखं भवेत् ।
ज्ञानानन्दमयः पूर्ण–आत्मा प्राप्यो निजाऽऽत्मना६२२
मदाज्ञापालका लोका, आत्मविश्वासियोगिनः ।
सर्वशक्तिप्रकाशार्थं, शक्ता भवन्ति सर्वथा ॥ ६२३ ॥
आत्मन्येव सुखं शान्तिं, निश्चित्य चोपकारिणः ।
साताऽसातविपाकानां, जेतारः समभावतः ॥६२४॥
पूर्णं मां हृत्सु धर्तार, आत्मवीर्यप्रकाशकाः ।
सर्वसङ्गेषु निर्लेपा मज्जना यान्ति मत्सुखम् ॥६२५॥
जीवादिनवतत्त्वानां, पूर्णश्रद्धाप्रधारकाः ।
सद्देवगुरुधर्माणां, श्रद्धावन्तः सुखार्थिनः ॥ ६२६ ॥
जैनार्थं जैनधर्मार्थं, जैनसंघाय मज्जनाः ।
कुर्वन्ति स्वार्पणं सर्व–माऽऽत्मोत्साहात्प्रवर्त्तिताः॥६२७॥
मतद्भेदं न कुर्वन्ति, संघसेवासु तत्पराः ।
मज्जैना आत्मनः पूर्ण–ज्ञानानन्दं प्रविदन्ते ॥६२८॥
मनोवाक्कायपयोगानां, सर्वशक्तिप्रकाशकाः ।
मनोवाक्कायपावित्र्य–धारका दोषवारकाः ॥ ६२९ ॥
सर्वधर्मप्रवेत्तारः, सर्वकर्मप्रवेदिनः ।
द्रव्यं क्षेत्रं च कालं च, भावं ज्ञात्वा प्रवर्त्तकाः ॥६३०॥

यथोग्यं तत्प्रकुर्वन्ति, स्वाऽऽत्मानन्दरसार्थिनः।
आत्मानन्दरसोन्मत्ता निश्चयव्यवहारिणः ॥६३१॥
सर्वैर्नयैर्हि तत्त्वज्ञा मच्छ्रद्धातः प्रवर्त्तकाः।
सर्वविश्वोपकारार्थं, सेवाभक्तिविधायिनः ॥ ६३२ ।
प्राप्तं मच्छरणं यैस्ते, यान्ति मुक्तिं न संशयः।
पापेष्वपिमहापापा मुक्तिं यान्ति मदाश्रयात् ॥६३३॥
मयि न्यस्य मनो लोकाः, सर्वकार्यस्य कारिणः।
निःसंगा आन्तरा भूत्वा, जिना बुद्धा भवन्ति ते ६३४
ममोपदेशवेत्तार–स्तदनुसारवर्तिनः।
स्वाधिकाराद् यथाशक्ति, प्रान्ते मुक्ता भवन्ति ते ६३५
सत्यं श्रद्दधते लोका–मद्वचांसि शिवार्थिनः।
मज्जैनास्तेऽवगन्तव्या आर्या हि जैनधर्मिणः ॥६३६॥
वीतरागदशां यान्ति, शुद्धोपयोगधारिणः।
जन्ममृत्युजरातीता भवन्ति क्षीणमोहकाः ॥ ६३७ ॥
आत्मार्पणं हविर्ब्रह्म, स्वाऽऽत्माग्नावाऽऽत्मना हुतम्।
शुद्धाऽऽत्मैव प्रगन्तव्य–आत्मधर्मसमाधिना ॥६३८॥
कदाऽपि दुर्गतिर्नैव, सर्वथा मम रागिणाम्।
मम श्रद्धानुसाराणा–मुन्नतिरान्तरा भवेत् ॥ ६३९ ॥
देवानां सर्वदेवाना–मिन्द्राणां धर्मदायिनः।
विश्वस्मिन् सर्वजीवानां, सुखशान्तिप्रदेशिनः॥६४०॥

मदर्थं जीविनो लोका मदर्थं कर्मकारकाः ।
निजाऽऽत्मानं महावीरं, कुर्वन्ति हि जिनं प्रभुम्॥६५१॥
सदाचारविचारैर्हि, जैनधर्मो जगत्त्रये ।
विश्वस्थसर्वजीवानां, शुद्धिं करोति सर्वदा ॥६५२॥
परस्परोपकारार्थं, यतन्तां भूतले जनाः ।
मनोवाक्कायपावित्र्यं, धरन्तु मुक्तिहेतवे ।६५३॥
विश्वलोकान् सुखीकर्तुं, जैनधर्मप्रचारणाम् ।
कुरुध्वं सर्वखण्डेषु, नास्ति धर्मं विना सुखम् ॥६५४॥
मद्बोधं प्राप्य भोलोका दर्शनज्ञानसंयमैः ।
अज्ञानपापकर्मभ्यो रक्षत विश्वदेहिनः ॥ ६५५ ॥
कुर्वन्तु नैव पापानि, पुण्यं कुर्वन्तु मानवाः ।
आत्मज्ञानं हृदि प्राप्य, भवन्तु स्वोपयोगिनः॥६५६॥
त्यक्त्वा मिथ्यात्विकीं बुद्धिं, सम्यग्दृष्टिं धरन्तु भोः ।
दशां वैभाविकीं त्यक्त्वा, स्वाभाविकीं धरन्तु भोः६५७
दुर्लभं दशदृष्टान्तै-र्लब्ध्वा नृजन्म मोहतः ।
हारयन्तु न सज्जन्म, धर्मं दधतु मानवाः ॥६५८॥
प्रमादाः परिहर्त्तव्या आत्मोत्साहप्रयत्नतः ।
विश्वासो नैव कर्तव्यो मोहस्य मोक्षकांक्षिभिः ६५९
दोषाश्चित्तोद्भवास्त्याज्या आत्मेक्षणविवेकतः ।
षडावश्यककर्माणि, कर्तव्यानि च संयतैः ॥६६०॥

देवपूजा गुरोः सेवा, तीर्थयात्रा तपो दमः ।
दया दानं च साधूनां, संगः कार्यो दिने दिने ॥६६१॥
आत्मज्ञानं च सद्ध्यानं, कर्त्तव्यं मोक्षकांक्षिभिः ।
आत्मशुद्धस्वरूपार्थं, यतितव्यं क्षणे क्षणे ॥ ६६२ ॥

सम्यग्दृष्टिप्रदातॄणां, गुरूणां हि निजार्पणम् ।
कर्तव्यं नामरूपादि-मोहं त्यक्त्वा विवेकिभिः ६६३
सद्गुणाः सर्वथा ग्राह्या-मोक्षमार्गानुसारिभिः ।
सर्वथा दुर्गुणास्त्याज्या-मोक्षमार्गविरोधिनः ॥६६४॥
आर्तध्यानं तथा रौद्र-ध्यानं त्याज्यं विवेकतः ।
धर्मध्यानं तथा शुक्ल-ध्यानं ध्येयं विवेकिभिः ॥६६५॥
दुष्टलेश्याः परित्याज्या ग्राह्या लेश्याः शुभा जनैः ।
सात्त्विकाऽऽहारपानाद्यैः, कर्तव्या चित्तशुद्धता ॥६६६॥

साधर्मिकस्य संघस्य, वात्सल्यं भक्तिभावतः ।
सूरिवाचकसाधूनां, साध्वीनां भक्तिसेवनम् ॥ ६६७ ॥
जैनधर्ममहाराज्य-ध्वजः सूर्यशशांकयोः ।
चिह्नयुक्तः प्रकर्त्तव्यः, स्थाप्यः पूज्यो महोत्सवैः ॥६६८॥

चतुर्विधस्य संघस्य, पूजनं भक्तिभावतः ।
साहाय्यं धर्मिलोकानां, जैनधर्मप्रवृद्धये ॥ ६६९ ॥
शुद्धाऽऽत्मराज्यसज्ज्ञान-पूर्णानन्दाऽऽप्तये ध्रुवम् ।
यतितव्यं हि सर्वीया, श्रद्धया जैनधर्मिभिः ॥६७०॥

समाजदेशादिहितक्रियायां,
व्यापारणीयं तु सदा स्वचित्तम् ।
परोपकारो निजसर्वयोगै-
रेतत्कृते त्यागिजनाऽवतारः ॥ ६७१ ॥

न त्यागिनां केऽपि भवन्ति दोषा-
स्ते रागरोषै र्न भवन्ति बद्धाः ।
आयुःक्षये मुक्तिरथाऽस्ति तेषां,
स्यात्यागिनां स्वानुभवः प्रमाणम् ॥ ६७२ ॥

सत्यागिनो मत्सदृशोत्तमास्ते,
तेषां पुरोऽन्ये तु भवन्त्यधःस्थाः ।
न त्यागिनां स्यान्ममतालवश्चे-
त्स्यात्तर्हि नो संयमरागवृत्तिः ॥ ६७३ ॥

हस्ता मदीयाः खलु येषु सन्ति,
तत्यागिनां हस्ततलेऽस्ति मुक्तिः ।
कार्यासुखाऽऽशा न जनेषु काचिद्,
सत्या सुखाशा विषयेषु नास्ति ॥ ६७४ ॥

आत्मा स्वयं सौख्यरसाब्धिपूर्णः,
शूरस्तथाऽसौ बहुशक्तितोऽस्ति ।
तद्रागिणस्त्यागिजनाश्च सन्ताः,
शान्ताश्च दान्ताश्च महामहान्तः ॥ ६७५ ॥

साहाय्यमारोहिजनाय दत्ते,
सहायकः स्याच्च यतस्ततोऽपि ।
देशेषु खण्डेष्वखिलेषु गत्वा,
ध्यानं तथा मे हृदये करोति ॥ ६७६ ॥

निजाऽऽत्मशुद्धौ कुरुते प्रयासं,
स्यादाऽऽत्मनः स्वानुभवे प्रकाशः ।
दूरं विदध्यादपि दोषिदोषा-
न्गुणानुरागैस्स्वगुणप्रकाशी ॥ ६७७ ॥

सम्मानयेद्यो जगदाऽऽत्मतुल्यं,
निजः परो वेति भवेन्न मोहः ।
यभूव येषां जगदाऽऽत्मतुल्यं,
तेषां प्रणेशुर्भवबन्धनानि ॥ ६७८ ॥

यो जीवति स्वाऽऽत्मविनोदतो वा,
सर्वं प्रकुर्वन्नपि नो करोति ।
सिद्धश्च बुद्धश्च भवेत्पराऽऽत्मा,
प्रयाति स स्वाऽखिलकर्मपारम् ॥ ६७९ ॥

ईदृग्विधा त्यागिदशा यतोऽस्ति,
पले पले सम्भवति स्वमुक्तिः ।
संत्याग एकोऽस्ति समस्तभूमौ,
सत्यप्रकाशं सहसा विभातुम् ॥ ६८० ॥

सुदर्शने साधुपदं हि सारं,
समुद्धृति र्यज्जगतोऽस्ति तेन ।
सत्यं गृहस्थाश्रमसत्प्रकाशं,
कर्तुं यतस्त्यागिपदं त्ववश्यम् ॥ ६८१ ॥
अङ्गीकरिष्यामि सुसाधुधर्मं,
कार्याणि तीर्थस्य मुदा विधातुम् ।
ममाऽस्ति कार्यं जगतां जनानां,
शान्तिं च विश्रान्तिमथो विधातुम् ॥ ६८२ ॥
आध्यात्मिकव्यष्टिसमष्टिरूपा,
सम्यक्त्वदृष्टि र्हि सुदर्शनाऽस्ति ।
पुरस्तवैवं प्रियसेवकानां,
योधात्सुखं क्षेममयो सदा स्यात् ॥ ६८३ ॥
सुदर्शनेऽतो भगिनी ममाऽसि,
त्वद्बोधनात्सर्वजनस्य हर्षः ।
जानीहि मां साम्प्रतमाऽऽत्मवीरं-
कुटुम्बवृन्दं तु समग्रविश्वम् ॥ ६८४ ॥
स्वं मानसं चाऽऽत्मवशं प्रकुर्या-
त्स मुक्तिसौख्यं झटिति प्रयाति ।
कुर्वन्ति मां ये शरणं मनुष्या-
भयं च दुःखं च न ते लभन्ते ॥ ६८५ ॥

दूरं च मृत्योरथ जन्मतोऽपि,
चात्यन्तिकाऽऽनन्दभरेण पूर्णः ।
न प्राप्नुयाद्यो मरणाच्च भीतिं,
मत्सदृशाज्ञीतिगुणाँश्च धत्ते ॥ ६८६ ॥

आलिङ्ग्य मृत्युं लभतेऽतिहर्षं,
यस्माद्भवेद्भाविमहाप्रकर्षः ।
परं च तन्मृत्युतिरस्कारिण्या–
आत्मोन्नतिस्तत्र झटित्युदेति ॥ ६८७ ॥

मृत्योर्द्वितीयः खलु पर्यवो यः,
सात्मानमेवं प्रकटीकरोति ।
समत्वभावान्ज्ञानिजनःस्वमृत्यौ,
शुद्धस्वभावं लभते स्वकीयम् ॥ ६८८ ॥

ये मृत्युकाले मयि मानसं स्वं,
न्यस्यन्ति ते भक्तजनाः पवित्राः ।
ते मृत्युकाले निजपापपश्चा–
त्तापेन पापानि निवारयन्ति ॥ ६८९ ॥

क्षमापयन्ते ननु ये स्वदोषाँ,
स्तन्मागरोषो विलयं प्रयातः ।
शुभाऽशुभस्वाऽऽचरणाऽनुसारं,
शुभाऽवतारोऽप्यशुभाऽवतारः ॥ ६९० ॥

मनो हि जन्मान्तरजापहेतु,
ज्ञात्वेति तद्वर्जनतः प्रसीद ।
शुभाऽशुभत्वं निजभावनानां,
त्यागेन काचिन्न हि कर्मभीतिः ॥ ६९१ ॥
ज्ञानी स्वमृत्योः प्रथमं हि मुक्तः,
पश्चाद्भवेत्सिद्धशिलोपविष्टः ।
धैर्यं परं धारय मृत्युकाले,
चान्तः सुवीर्यं प्रविकाशय त्वम् ॥ ६९२ ॥
आत्मोपयोगेन भवेद्विमुक्तिः,
साऽत्यन्तिकानन्दवती विमुक्तिः ।
न चाऽऽत्मनो मृत्युभयं कदाचि–
च्चाऽऽत्माऽमरो निश्चयतोऽस्ति विद्धि ॥ ६९३ ॥
लीनो भव स्वाऽऽत्मनि निश्चयेन,
स्वान्तश्च दीनो न भवाऽपि किंचित् ।
स्वर्गो मिलेत्स्वीयशुभोपयोगे–
र्निजाऽऽत्मभावेन भवेद्विमुक्तिः ॥ ६९४ ॥
आत्मोपयोगेन सरेत्क्षणं य–
न्मचक्रुद्धया शैवपदं च लभ्यम् ।
मत्वा च येषां न समस्ति चित्तं,
ये सन्ति मयि प्रसन्नाः ॥ ६

आत्मस्वरूपेण स आत्मरूपो-
ऽप्यस्ति तत्राऽस्ति च कर्मभीतिः ।
दयासमो नास्ति जगत्सु धर्मो-
दयासमं नास्ति च कर्म किंचित् ॥ ६९६ ॥

दयां विना नैव मनः पवित्रं,
न्यायो महान्कोऽपि च नो दयातः ।
एहादयो भान्ति सदा दयातो-
दयालुजन्माऽपि सदा विभाति ॥ ६९७ ॥

यस्यां क्षितौ दुःखिदयासमानो-
धर्मो न कोऽप्यस्ति प्रमाणभूतः ।
हिंसासमं नास्ति जगत्सु पापं,
दयास्वधर्मेण विभाति भक्तिः ॥ ६९८ ॥

नचाऽपि पेयं रुधिरं पशूनां,
न स्युः प्रवृत्ताः पशुखादनेषु ।
पशून् धनं विद्धि च भारतस्य,
दुग्धेन युष्मानुपकुर्वते ये ॥ ६९९ ॥

कृषौ पशूनां च सहायताऽस्ति,
सौख्यप्रदान्रक्षत तान्गवादीन् ।
शुभोपयोगं कुरु तत्पशूनां,
न किन्तु तेषां वधमाचर त्वम् ॥ ७०० ॥

रोगा विनश्यन्ति हि पक्षिजिस्तु,
ते वर्द्धयन्ते प्रकृतेश्च लीलाम् ।
सर्वेषु खण्डेषु पशूंश्च रक्ष,
प्रकाशते तत्कृतितः शिवं च ॥ ७०१ ॥

गृहे गृहे सत्पशुपालनं स्या-
त्सुखप्रदा तत्र दया मदीया ।
ये दुःखिनोऽशक्तजनाश्च रुग्णा,
दयस्व तेषामुपरि प्रियत्वात् ॥ ७०२ ॥

रक्षा भवेद्यत्र च गर्भिणीनां,
व्यक्ता भवेद्धिरहो समग्रा ।
सेवा यतः स्याच्च रुजार्दितानां,
यत्रौषधावस्ति धनव्ययश्च ॥ ७०३ ॥

सेवा शुभा यत्र च गर्भिणीनां,
न सङ्कटः किञ्चिदुदेति यत्र ।
विश्वस्य सेवैव ममापि सेवा,
देवो भवेत्केवलसेवनेन ॥ ७०४ ॥

प्रयोजनं यस्य च यत्र काले,
तत्तत्परः स्वोचितकर्म कुर्वन् ।
भवेच्च यः क्षेत्रसमर्थकाल-
ज्ञाता दयादानदमादिकर्ता ॥ ७०५ ॥

स्त्रीसतीभिक्षुकहारवाणां,
न ग्राहकाःस्युःखलु दुःखदास्ते ।
नांत्रजालं न च दाहनीयं,
विराधनीया मुनयो न केऽपि ॥ ७०६ ॥

ह्या न शापाश्च सतीयतीनाम्
जगत्सु पापानि न वा कुरुष्व ।
मारयत्वं ननु दुःखिजीवा-
न्निर्दोषिणो वारय हन्यमानान् ॥ ७०७ ॥

अज्ञानतो येऽथ कृतोऽपराध-
स्तेषां क्षमा चेतसि मार्गणीया ।
कदापि जीवान्नहि संहर त्वं,
कुर्याः कुमारीव्रतरक्षणं च ॥ ७०८ ॥

साक्षी मृषा योऽस्ति मृषा च लेखो-
निःसत्यवार्तास्तु सदा उपेक्ष्याः ।
कलङ्कमारोपय केषुचिन्नो,
जानीहि विश्वासममन्यवित्तम् ॥ ७०९ ॥

नचाऽन्यजीवेषु च देहि दुःखं,
सम्बन्धिनां नाशया द्विपत्तीः ।
सन्तापय त्वं न सतो न धेनू-
र्ऋद्धेर्विनाशोऽस्त्यसुखेन तेषाम् ॥ ७१० ॥

चौर्यादसत्याज्जगतोऽस्ति दुःखं,
सत्यादचौर्यात्पुनरस्ति सौख्यम् ।
सत्येन बुद्ध्वा जगदुद्धृतिं च,
स्त्रियो नराः सत्यपथेन यान्तु ॥ ७२१ ॥

समग्रभापादिकलेखबोधै-
र्भवन्ति विद्याधनदेहसत्ताः ।
वदन्तु सत्यं च तदाऽऽचरन्तु,
कृत्य न्त्विदं सात्त्विकजीवनस्य ॥ ७२२ ॥

सत्यार्थिनां स्यात्परमा सुखाशा,
विश्वप्रकाशो न च सत्यतुल्यः ।
सत्यस्वरूपोऽस्ति हि जैनधर्मो-
ज्ञात्वेति सत्यं प्रणिरूपय त्वम् ॥ ७२३ ॥

दोषाँश्च निःसारय दोषिणां त्वं,
निर्दोषमाऽऽत्मानमिमं प्रपश्य ।
त्वं विद्धि सर्वानुपयोगिजीवाँ-
स्त्वं सर्वजीवैःसह रागवान्स्याः ॥ ७२४ ॥

पश्याऽऽत्मतुल्यान्सकलान्हि जीवा-
नुपेक्षयतां स्वप्रकृतेः स्वभावः ।
गृहाण सर्वस्य शुभाय भागं,
परोपकाराय कुरुष्व दानम् ॥ ७२५ ॥

एकाग्रचित्तेन मयि स्थिरो यः,
प्रकाशते तेषु विरक्तिबोधः।
धर्मं च विद्यान्मदभिन्नमेतं,
स शक्तिभिः स्या न्मनुजोऽतिपीनः ॥ ७३१ ॥
विश्वेषु धर्मस्य परं प्रचारं,
कुर्वन्तु भक्ता मनुजाः स्त्रियश्च।
कुरुष्व देवस्य गुरोश्च मानं,
लीनो मयि स्याः परमप्रवीणः ॥ ७३२ ॥
ये स्त्रीनरा मां न हृदामनन्ति,
तथापि रागं कुरु तेष्ववश्यम्।
आदाय मैत्रीं च कुरूपकारं,
सत्यं भविष्यन्ति हि रागिणस्ते ॥ ७३३ ॥
आजीविकाद्यर्थसहायता च,
न्यायस्तथाऽन्येषु च धर्मिषु स्यात्।
भक्तास्त्ववश्यं मम भाविनस्ते,
तेनाप्नुहि त्वं सदपारधर्मम् ॥ ७३४ ॥
स्यात्कर्मणा वा स्वगुणेन वर्णः,
संशोभते भक्तजनश्च भक्त्या।
आत्मस्वभावै जगतोऽस्त्यभेदो
ज्ञात्वा च सेवस्व सदा ममाज्ञाम् ॥ ७३५ ॥

मत्तो न कश्चित्परमेश्वरोऽन्यो-
ज्ञात्वेति सेवस्व सदा ममाज्ञाम् ।
दुस्तर्कबुद्धिं च विधाय दूरं,
श्रद्धानुरागैर्भव पूर्णपूर्णः ॥ ७३६ ॥
मयि प्रमान्त्येव समग्रधर्मा-
ज्ञात्वा शुभं कर्म सदा कुरुष्व ।
भक्तिं सदामत्समसद्गुरूणां,
युगे कलौ सद्गुरुतोऽस्ति शक्तिः ॥ ७३७ ॥
कलौ मदर्चा गुरुसेवया स्या-
च्छ्रद्धया गुरोः शक्तिरहो मदीया ।
भेदौ गुरो स्त्यागिगृहस्थतो द्वौ,
तत्सेवनान्नश्यति खेदराशिः ॥ ७३८ ॥
ज्ञानं तथा श्रीगुरुसेवया स्या-
च्छीर्वाध्दिकग्रन्थविलोकनात्स्यात् ।
तत्सेवया स्वाऽनुभवस्तथा स्या-
त्प्रयाति दूरं च मृषात्वबुद्धिः ॥ ७३९ ॥
किंचाऽपमानेन सतां गुरूणा-
माऽऽत्माऽवबोधस्य च विस्मृतिः स्यात् ।
कुलक्षयः सद्गुरुनिन्दया स्या-
न्न तत्र कश्चित्प्रजयत्नुपायः ॥ ७४० ॥

एकाग्रचित्तेन मयि स्थिरो यः,
प्रकाशते तेषु विरक्तिबोधः ।
धर्मं च विद्यान्मदभिन्नमेतं,
स शक्तिभिः स्या न्मनुजोऽतिपीनः ॥ ७३१ ॥

विश्वेषु धर्मस्य परं प्रचारं,
कुर्वन्तु भक्ता मनुजाः स्त्रियश्च ।
कुरुष्व देवस्य गुरोश्च मानं,
लीनो मयि स्याः परमप्रवीणः ॥ ७३२ ॥

ये स्त्रीनरा मां न हृदामनन्ति,
तथापि रागं कुरु तेष्ववश्यम् ।
आदाय मैत्रीं च कुरूपकारं,
सत्यं भविष्यन्ति हि रागिणस्ते ॥ ७३३ ॥

आजीविकाद्यर्थसहायता च,
न्यायस्तथाऽन्येषु च धर्मिषु स्यात् ।
भक्तास्त्वदर्थं मम भाविनस्ते,
तेनाप्नुहि त्वं सदपारधर्मम् ॥ ७३४ ॥

स्यात्कर्मणा वा न गुणेन वर्णः,
संशोधने भक्तजनश्च भाग्या ।
आत्मस्वभावे जगतोऽस्त्यभेदो
ज्ञात्वा च सेवस्व सदा ममाज्ञाम् ॥ ७३५ ॥

मत्तो न कश्चित्परमेश्वरोऽन्यो-
ज्ञात्वेति सेवस्व सदा ममाज्ञाम् ।
उत्तर्कबुद्धिं च विधाय दूरं,
श्रद्धानुरागैर्भव पूर्णपूर्णः ॥ ७३६ ॥
मयि प्रमान्त्येव समग्रधर्मा-
ज्ञात्वा शुभं कर्म सदा कुरुष्व ।
भक्तिं सदामृतसमसद्गुरूणां,
युगे कलौ सद्गुरुतोऽस्ति शक्तिः ॥ ७३७ ॥
कलौ मदर्चा गुरुसेवया स्या-
त्वया गुरोः शक्तिरहो मदीया ।
भेदौ गुरो स्त्यागिगृहस्थतो द्वौ,
तत्सेवनान्नश्यति खेदराशिः ॥ ७३८ ॥
ज्ञानं तथा श्रीगुरुसेवया स्या-
द्वीर्वादिकग्रन्थविलोकनात्स्यात् ।
तत्सेवया स्वाऽनुभवस्तथा स्या-
त्प्रयाति दूरं च मृषात्वबुद्धिः ॥ ७३९ ॥
किंचाऽपमानेन सतां गुरूणा-
माऽऽत्माऽवबोधस्य च विस्मृतिः स्यात् ।
कुलक्षयः सद्गुरुनिन्दया स्या-
न्न तत्र कश्चित्प्रभवत्युपायः ॥ ७४० ॥

एकाग्रचित्तेन मयि स्थिरो यः,
प्रकाशते तेषु विरक्तिबोधः ।
धर्मे च विद्यान्मदभिन्नमेतं,
स शक्तिभिः स्या न्मनुजोऽतिपीनः ॥ ७३१ ॥

विश्वेषु धर्मस्य परं प्रचारं,
कुर्वन्तु भक्ता मनुजाः स्त्रियश्च ।
कुरुष्व देवस्य गुरोश्च मानं,
लीनो मयि स्याः परमप्रवीणः ॥ ७३२ ॥

ये स्त्रीनरा मां न हृदामनन्ति,
तथापि रागं कुरु तेष्ववश्यम् ।
आदाय मैत्रीं च कुरूपकारं,
सत्यं भविष्यन्ति हि रागिणस्ते ॥ ७३३ ॥

आजीविकार्थंसहायता च,
न्यायस्तथाऽन्येषु च धर्मिषु स्यात् ।
भक्तास्त्वदीयं मम भाविनस्ते,
तेनाप्नुहि त्वं सदुपारधर्मम् ॥ ७३४ ॥

स्यात्कर्मणा वा स्वगुणेन वर्णः,
संशोभने भक्तजनश्च भव्या ।
आत्मस्वभावे जगतोऽस्त्यभेदो
ज्ञात्वा च तेरस्व सदा ममाज्ञाम् ॥ ७३५ ॥

मत्तो न कश्चित्परमेश्वरोऽन्यो—
ज्ञात्वेति सेवस्व सदा ममाज्ञाम् ।
दुस्तर्कबुद्धिं च विधाय दूरं,
श्रद्धानुरागैर्भव पूर्णपूर्णः ॥ ७३६ ॥
मयि प्रमान्त्येव समग्रधर्मा—
ज्ञात्वा शुभं कर्म सदा कुरुष्व ।
भक्तिं सदामत्समसद्गुरूणां,
युगे कलौ सद्गुरुतोऽस्ति शक्तिः ॥ ७३७ ॥
कलौ मदर्चा गुरुसेवया स्या—
त्त्वव्यया गुरोः शक्तिरहो मदीया ।
भेदौ गुरो स्त्यागिगृहस्थतो द्वौ,
तत्सेवनान्नश्यति खेदराशिः ॥ ७३८ ॥
ज्ञानं तथा श्रीगुरुसेवया स्या—
च्छीर्वाधिकग्रन्थविलोकनात्स्यात् ।
तत्सेवया स्वाऽनुभवस्तथा स्या—
त्प्रयाति दूरं च मृषात्वबुद्धिः ॥ ७३९ ॥
किंचाऽपमानेन सतां गुरूणा—
माऽऽत्माऽवबोधस्य च विस्मृतिः स्यात् ।
कुलक्षयः सद्गुरुनिन्दया स्या—
न्न तत्र कश्चित्प्रभवत्युपायः ॥ ७४० ॥

गच्छेरक्षणं नो गुरुमन्तराऽत्र,
प्रादुर्भवन्नकिरपि प्रणश्येत् ।
पश्यन्ति ये वा गुरुदूषणानि,
ब्रुवन्ति तेऽन्ते प्रसभं रुदन्ति ॥ ७४१ ॥
तस्माद्गुरूणां भव रागयुक्त–
स्तत्सेवया छिन्धि च कर्मराशिम् ।
कुर्या गुरूणामुपरि क्रुधं नो,
गुर्वन्तिके त्वं शृणु सत्यबोधम् ॥ ७४२ ॥
सुधामुपालम्भमवेहि तेषां,
रमस्व बुद्ध्वा मम भावतस्त्वम् ।
विश्वासरागौ गुरुषु प्रधाय,
भवन्तु शूराः क्रमशश्च लोकाः ॥ ७४३ ॥
भक्ता गुरोर्ये च कलौ युगे स्यु–
र्मत्सेवकाँस्तान्हृदयेन विद्धि ।
कल्याणमालं गुरुसेवया स्या–
न्नश्यन्ति सर्वाश्च कुबुद्धयस्ताः ॥ ७४४ ॥
मत्सदृशे विश्वसनं च येषां,
तेषां च सम्यक्त्वमवश्यमस्ति ।
काले यतो ये गुरवो भवन्ति,
कालेऽततो मत्सदृशा विबोधदाः ॥ ७४५ ॥

संरक्ष निज्ञानिगुरुं च शीर्षे,
धीरश्च वीरः प्रभविष्यासि त्वम् ।
सदाऽऽज्ञया ज्ञानिगुरोश्चल त्वं,
स्या बद्धकक्षा गुरुजक्तिपु त्वम् ॥ ७४६ ॥
सद्युक्तिभिर्मण्डय जैनधर्मं,
श्रेष्ठोऽस्त्ययं मत्प्रियभक्तधर्मः ।
विश्वेषु विस्तारयितुं स्वधर्मं,
नराः स्त्रियः सर्वमपि त्यजन्तु ॥ ७४७ ॥
श्रीजैनधर्मप्रतिपक्षिणो ये,
ते शत्रवः सन्ति ममानुगानाम् ।
धर्म्ये च युद्धं रिपुभि र्विधेयं,
धृत्वा कलास्सर्वविधैः प्रयत्नैः ॥ ७४८ ॥
श्रीजैनधर्मः सुखशान्तिदाता,
यतः स मिथ्याभ्रमवारकोऽपि ।
जैना नरा रक्षत जैनधर्मं,
कालानुसारं प्रविधाय कर्म ॥ ७४९ ॥
विरोधिभिर्युध्यत वा प्रियधर्मं,
श्रीजैनधर्मप्रतिपालनार्थम् ।
सत्तां धनं बुद्धिबलं लभन्तां,
श्रीजैनधर्माय विधत्त सर्वम् ॥ ७५० ॥

स्वजीवनं जैनहिताय याया-
रमकाशते तत्र ममोच्चभक्तिः ।
जैनाय सर्वं ददतां जनानां,
पर्वाणि सर्वे दिवसा भवन्ति । ॥ ७५१ ॥

विधत्त रक्षां शरणागतानां,
नीत्वा मृतौ हर्षमथो कुरुध्वम् ।
न्यायेन लोकेषु विभान्ति भूपा ।
येऽपक्षपातश्च धरन्ति राज्यम् ॥ ७५२ ॥

आज्ञानुसारं मम राज्यकार्य-
प्रचारतः स्यात्सुखराज्यवृद्धिः ।
कुर्यु नृपाश्चेदशुभाभिलाषं,
नश्यन्ति पृथ्वीरससान्तयःस्ताक् ॥ ७५३ ॥

राजा भवेद्गुणतोऽतिहीनः,
क्षीणाःसुतास्तस्य परम्पराभिः ।
स्वजोगतो राज्यमथो करोति,
ज्ञानं विना स्यात्तमसः समूहः ॥ ७५४ ॥

प्रजासुखार्थं हि भवन्ति भूपा-
न च प्रजादुःखयुताऽस्तितेषाम् ।
योऽर्नीतितो दण्डयति स्वलोकाँ-
स्तद्भूपतेर्निश्चित एव पातः ॥ ७५५ ॥

जानन्ति ये पुत्रसमाः प्रजाः स्वा-
नृपाभिमानं न तथा धरन्ति ।
यो वर्तते सम्मतितः प्रजानां,
राजा स कीर्तिं लभते प्रकृष्टाम् ॥ ७५६ ॥

परस्त्रियः पश्यति मातृतुल्याः,
कुर्यान्न कस्याऽप्यतिकुप्य घातम् ।
प्राणान्प्रजार्थं प्रददाति यो वा,
सभूपतिर्मानगुणाँश्च विन्ते ॥ ७५७ ॥

प्रजाजने द्वेष्टि न यः कदाचि-
त्प्रजाजनक्लेशनिवारको यः ।
प्रजाजना न्दाससमा श्च कुर्या-
न्मनस्तु मन्नाम मुदा जपन्यः ॥ ७५८ ॥

न राजभावःसुलभोऽस्ति किञ्चिद्,
गुणान्विना भूमिपु दुर्लभः सः ।
नराः स्त्रियो यस्य निजाऽऽत्मतुल्या
जेता नृपो भूमिपु शोभते सः ॥ ७५९ ॥

सर्वप्रजानां ननु सेवको यः,
सर्वप्रजानां ननु रक्षको यः ।
विश्वप्रजाभ्यः प्रवरं न विद्या-
त्प्रजोन्नतौ प्राणधनादिदाता ॥ ७६० ॥

एवं नृपः स्वीकरणीय इष्टो–
यः स्वीयदोषान्स्वगुणाँश्च वेत्ति ।
गुणान्विना वंशपरम्पराभि–
र्भूपः प्रजानां बहुदुःखदः स्यात् ॥ ७६१ ॥

देशस्य संघस्य भवेन्निपात–
स्तस्माद्गुणाढ्यो नृपतिर्विधेयः ।
अल्पंतुदोषं च महाप्रलाभं,
यो वेत्ति राजा स गुणैः प्रपूर्णः ॥ ७६२ ॥

राज्यं तु तेषां वशमस्ति येषां,
शक्त्येव लभ्या पदवी समग्रा ।
पुरस्सरो योऽस्ति च राज्यभूमे–
र्नानागुणाढ्यश्च महान्नवेयः ॥ ७६३ ॥

परोपकारेषु रता मनुष्या–
नातिक्रमन्त्येव कदापि नीतिम् ।
सर्वप्रजानां न भवेच्च इष्टो–
नाऽसौ नरो भूपपदे निधेयः ॥ ७६४ ॥

नानागुणाढ्यं च कुरु प्रधानं,
सेनापतिं शक्तिगुणाकरं च ।
भक्ता हि मे सन्ति पुरस्सरास्ते,
सन्त्याकराः शौर्यगुणादिकानाम् ॥ ७६५ ॥

राज्ञादयो यत्र भवन्ति चैवं,
कृपा मदीया तु भवेद्धि तत्र ।
अग्रेसरत्वं मम सेवकैस्त-
द्राज्यादिके कर्मणि संविधेयम् ॥ ७६६ ॥

विश्वेषु सर्वत्र हि जैनधर्म-
प्रचारणार्थं सुखदाऽस्ति सेवा ।
गृहस्थभक्ता निजजन्मदेशं,
संरक्षितुं कर्म सदाऽऽचरन्तु ॥ ७६७ ॥

जन्माऽवनीरक्षणतोऽस्ति धर्मः,
प्रपालय त्वं कुरु कर्म योग्यम् ।
गृहस्थजैना निजसर्वशक्तीः,
संरक्ष्य भक्तिं मनसाऽऽचरन्तु ॥ ७६८ ॥

कालाऽनुसारं च भवेद्गृहस्थ-
जैनप्रजाऽऽचारविचाररीतिः ।
बलादितः शत्रुचयं जयन्ति,
स्वर्गो मनः स्यात्परमाऽनुरागैः ॥ ७६९ ॥

जीवन्त एवम्विधजैनवर्गा-
ये सन्त्यशक्ताः सुतरां मृतास्ते ।
सुदर्शने व्यञ्जय सर्वशक्ती-
स्त्वं संयमे पालय लक्ष्यबिन्दुम् ॥ ७७० ॥

आत्माऽस्त्ययं सँय्यमतो हि सिद्ध-
श्चार्हन्पराऽऽत्मा स हि बुद्धदेवः ।
सुदर्शने विद्धि निजावतारं,
सत्संय्यमैराऽऽत्मसुखप्रदं तत् ॥ ७७१ ॥

स्त्रीत्वेन नार्यः सकला विभान्ति,
नराः पुनः सत्पुरुषत्वयोगैः ।
स्त्रीधर्मतः स्त्रीजनसद्गतिः स्या-
त्सम्यग्यतिः सँय्यमतो विभाति ॥ ७७२ ॥

ईदृक्प्रबोधाऽऽचरणेन सर्वे,
क्लेशा विनश्यन्ति सुदर्शने हे ।
त्वं स्वाऽधिकारेण च विद्धि धर्म,
निजाऽधिकारेण विधिं विधातुम् ॥ ७७३ ॥

निजाधिकारैः समुदेति शक्ति-
र्व्यक्तिं तथा विद्धि निजाऽधिकारैः ।
निजाऽधिकारेण विना गतिर्नो,
निजाऽधिकारेण विना न बुद्धिः ॥ ७७४ ॥

निजाधिकारैरतिभिन्नभिन्ना-
ञ्जानीह्यसंख्यान्निह धर्मभेदान् ।
सर्वे सदाचारविचारधर्मा-
गुणक्रिये चाऽप्यधिकारियोगैः ॥ ७७५ ॥

यो दुर्गुणव्यसनवृद्धिनिवारकः स्या–
च्चैनधर्मधरणाऽऽजगदुन्नतिः स्यात् ।
आत्मादिकोन्नतिरहो प्रभवेच्च यस्मा–
द्धर्मः स एक इह तारकजैनधर्मः ॥ ७७६ ॥

देशस्य संघस्य समुन्नतिः स्या–
द्यत्कर्म धर्मोऽस्ति सुशोभते च ।
स्याद्देशकालानुसृतेश्च नीति–
स्तथैव रीत्याऽस्ति च संघरीतिः ॥ ७७७ ॥

कुनीतिदूरीतिविनाशनेन,
धर्मस्य नीतिः प्रभवेच्च शुद्धा ।
विधेहि सत्कर्म च निर्णयः स–
न्विनाऽऽत्मना नास्ति सुखं जडेषु ॥ ७७८ ॥

शुभाऽशुभां बुद्धिमृते कुरुष्वाऽ
स्त्येषा शुभा मुक्तदशाप्रतिज्ञा ।
वर्तस्व साम्येन वसुन्धरायां,
कुरूपकारं शुभकर्मभिस्त्वम् ॥ ७७९ ॥

त्वं धारयाऽऽत्मस्थतमो यथेच्छं,
त्वं सात्त्विके कर्मणि धेहि बुद्धिम् ।
अन्ये जनाश्चेन्न सहायकास्ते
तथापि नो धेहि मनःकषायम् ॥ ७८० ॥

आत्माऽस्त्ययं सँय्यमतो हि सिद्ध-
श्चार्हन्पराऽऽत्मा स हि बुद्धदेवः ।
सुदर्शने विद्धि निजावतारं,
सत्संय्यमैराऽऽत्मसुखप्रदं तत् ॥ ७७१ ॥

स्त्रीत्वेन नार्यः सकला विभान्ति,
नराः पुनः सत्पुरुषत्वयोगैः ।
स्त्रीधर्मतः स्त्रीजनसद्गतिः स्या-
त्सम्यग्यतिः सँय्यमतो विभाति ॥ ७७२ ॥

ईदृक्प्रबोधाऽऽचरणेन सर्वे,
क्लेशा विनश्यन्ति सुदर्शने हे ।
त्वं स्वाऽधिकारेण च विद्धि धर्मं,
निजाऽधिकारेण विधिं विधातुम् ॥ ७७३ ॥

निजाधिकारैः समुदेति शक्ति-
र्व्यक्तिं तथा विद्धि निजाऽधिकारैः ।
निजाऽधिकारेण विना गतिर्नो,
निजाऽधिकारेण विना न बुद्धिः ॥ ७७४ ॥

निजाधिकारैरतिभिन्नभिन्ना-
ञ्जानीह्यसंख्यानिह धर्मभेदान् ।
सर्वे सदाचारविचारधर्मा-
गुणक्रिये चाऽप्यधिकारियोगैः ॥ ७७५ ॥

चित्तं च रक्षाऽऽत्मनि देशतस्त्वं,
वाण्या च सत्यं वद भूमिमध्ये ।
तनुं च रक्षाऽऽत्मनिदेशतस्त्वं,
चास्वादयाऽऽत्मानुभवं रसं त्वम् ॥ ७८६ ॥
शुद्धाऽऽत्मकीभूय कुरूपकारं,
सुदर्शने सत्यसुखं लभस्व ।
सुदर्शना त्वं भगिनी मदीया,
तस्माच्चिदानन्दमवाप्नुहि त्वम् ॥ ७८७ ॥
तवाश्रयेऽहं निजसेवकानां,
शिक्षा प्रदत्ता च महार्हदीक्षा ।
देवाधिदेवेश सदा जय त्वं,
सुरासुरादिप्रतिसेवितस्त्वम् ॥ ७८८ ॥
प्रभो महावीर सदा जय त्वं,
गुणाकरं च कृतवान्प्रबोधम् ।
सार्द्धं मया भक्तजनैश्च सार्द्धं,
अदा हि देव प्रतिबोध मेतम् ॥ ७८९ ॥
वेदा अपि त्वां प्रणमन्ति भक्त्या,
हेविश्वविश्राम सदा जय त्वम् ।
मुक्तिस्तु गानेन भवद्गुणानां,
तवोपरि प्रीतिरियं हि भक्तिः ॥ ७९० ॥

त्वं स्वाश्रयीभूय जगत्सु गच्छ,
स्वमाऽऽत्मनि स्वान्तमहो निधेहि।
जातिः प्रमाणं तु गुणक्रियाभ्यां,
न जन्मना जातिरहो प्रमाणम् ॥ ७८१ ॥
जातिर्भवत्येव गुणक्रियाभ्या-
मीदृग्विधैवाऽस्ति सदा ममाज्ञा।
नचाऽऽत्मनो ज्ञातिरथ स्वजाति-
र्गुणस्य सँस्कारतएव विद्धि ॥ ७८२ ॥
श्रेष्ठः शुभे यद्गुणकर्मणी स्त-
श्चान्योऽस्त्यधस्ताद्धि सतांगुणानाम्।
विद्ध्युत्तमं सद्गुणिनं मनुष्यं,
नीचं तथा दुर्गुणिनं मनुष्यम् ॥ ७८३ ॥
कुर्याच्छुभाचारविचारतो य
स्तामुच्चजातिं खलु निश्चिनु त्वम्।
ज्ञानादितः सन्ति हि जातयस्ता,
स्तस्माद्यतः स्वोत्तमतां लभन्ते ॥ ७८४ ॥
ईदृक् तु मच्छासनमस्ति सत्यं,
जानन्ति तेषां सफलं हि कृत्यम्।
संक्षेपतोऽयं कृतवान्प्रबोधं,
दृष्ट्वाद्विचाराक्कुरु निश्चयम् ॥ ७८५ ॥

वैराग्यसिद्धिस्तवशुद्धरागा-
स्त्यागोऽपि शुद्धस्त्वयि भक्तितः स्यात् ।
सदा जवेत्त्वच्चरणं ममापि,
त्वद्दर्शनाच्छान्तिरथो सुखं स्यात् ॥ ७९१ ॥
साकार ईशोऽसि शरीरयोगे-
र्नरान्भिव्यस्तारयसे च तेन ।
देहं विना स्यान्न परोपकारः,
स्याज्जिह्वया देव शुभोपदेशः ॥ ७९२ ॥
तस्माच्च साकार उपग्रही स्या-
द्वीरप्रभो देव जगच्छरण्य ।
जिह्वात आविर्भवति प्रबोध-
स्तस्माद्धि वह्नेरुपमाऽस्ति तस्याः ॥ ७९३ ॥
द्रव्यश्रुतीनामसि देव कर्ता,
भावश्रुतीनामपि कारकोऽसि ।
नयैरनेकैश्च गभीरबोधं,
ददौ भवान्हे भगवन् कृपालो ॥ ७९४ ॥
पानेन सौख्यं तव वाक्सुधाना-
मनन्तकालीनमपैति दुःखम् ।
प्रादुर्बभूव प्रभुवीरदेवः,
सेवा तवाज्ञासु हि देवदेव ॥ ७९५ ॥

व्रतोत्सवादौ विहिते च भावे;
प्रवर्द्धमाने भविताऽति हर्षः ।
कल्याणदीक्षोत्सवपर्वणां ते;
भविष्यति क्षेममथो विधानात् ॥ ८२१ ॥
दीक्षादिनत्यागिकसंस्मृतौ ते,
जना भविष्यन्ति च वीतरागाः ।
यात्रा च ते कार्तिकपूर्णिमायां,
भक्तैः कृता तेन हि पर्व जातम् ॥ ८२२ ॥
तस्माद्दिनाद्यात्रिकपर्व जातं,
तस्मिन्कृतेऽनन्तसुखप्रदं तत् ।
दिश्युत्तरस्यां मनुजास्त्रियश्च,
महाप्रभुं त्वां सममानयन्त ॥ ८२३ ॥
सुखप्रदं फाल्गुनपूर्णिमायां,
पर्वाऽभवत्तेन गुणाकरस्तत् ।
जज्वाल वह्निः प्रसभं प्रसन्नो–
विभो जगच्छीतनिवारणार्थम् ॥ ८२४ ॥
गास्यन्ति गानं तत एव लोका–
स्त्वद्भक्तिचिह्नैकधिया विभूय ।
देवा महावीरसुनाम चक्रुः,
श्रीमार्गशीर्षस्य च पूर्णिमायाम् ॥ ८२५ ॥

कृष्णाष्टमी याऽस्ति च चैत्रमासे,
सा वर्द्धमानाभिधरम्यपर्व ।
माघस्य कृष्णेतरपंचमी या,
पर्वास्ति यस्यां गतगर्व इन्द्रः ॥ ८२६ ॥
माता निजं दोहदमाशु जिग्ये,
तस्माच्च पर्वाऽस्ति परं पवित्रम् ।
लग्नस्य वारोऽपि महर्द्धिपर्व,
वध्वा वरस्याऽपि सुखाय धाम ॥ ८२७ ॥
ऋतोर्वसन्तस्य च पंचमी या,
सर्वत्र विश्वेषु सुखप्रदा सा ।
शुक्लाश्विने श्रीदशमी तिथि र्या,
पूजा महावीर तवाविरासीत् ॥ ८२८ ॥
त्वन्नामतो भाविजयोत्सवोऽपि,
त्वज्जापतो नश्यति पातकौघः ।
शुक्लाश्विनस्याऽस्ति शुभाष्टमी या,
तस्यां च देवी त्रिशला बभूव ॥ ८२९ ॥
पूजा भविष्यन्ति जगत्सु देव्याः,
पूज्या भविष्यन्ति जगत्सु सत्यः ।
भावीनि भूतानि च यद्व्रतानि,
श्रीमन्निमित्तानि च तानि सन्ति ॥ ८३० ॥

सुखं कृते पर्वमहोत्सवे च,
श्रीजक्तदुःखानि विनाशयेत्सः ।
एकाग्रबुद्ध्या तपसा व्रतेन,
ध्यानं तवाकारि यशोदयाऽपि ॥ ८३१ ॥
आषाढमासस्य वरव्रतानि,
बाला विधास्यन्ति विनोदयुक्ताः ।
प्रभो महावीर विभो दयालो,
पदे पदे मंगलमातनोतु ॥ ८३२ ॥
ऋद्धिं च सिद्धिं च सुखं करोतु,
त्वन्नामतः सिद्धिरहो नितान्तम् ।
त्वन्नामतो भूमितले मनुष्याः
शान्तिं च पुष्टिं च सदा लभन्ते ॥ ८३३ ॥
लक्ष्मीं लभन्ते ध्रुवमत्र ये त्वां,
गायन्ति शृण्वन्ति तथा पठन्ति ।
शान्तिर्भवेत्तुष्टिरथापि पुष्टि-
र्जगत्सु जैनाः सुखिनो भवन्तु ॥ ८३४ ॥

इतिश्री सुदर्शनासुबोधः समाप्तः